# सिद्धान्तकौमुदी।



उत्तरार्द्धम्।

महामहोपाध्याय-श्रीभट्टोजिदीक्षितविरचितम्।

कलिकाता-संस्कृतविद्यामन्दिराध्यक्षेण-

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण

सङ्कलितया सरलाख्यया व्याख्यया

समुल्लसितम्।

सरस्वतीयन्त्रे पुनर्मुद्रितम्।

तेनैव संस्कृतम्



# SIDDHANTA KOUMUDI.

BY

BHATTOJI DIKSHITA

*In Two Vols.—Vol II.*

Edited with a Commentary

BY

TARANATHA TARKAVACHASPATI

PRINCIPAL FREE SANSKRIT COLLEGE.

*Third Edition.*

*CALCUTTA.*

Published by Pandit Jibananda Vidyasagara B. A.

1884.

# सिद्धान्तकौमुदी

## परार्द्धम् ।

---

श्रौत्राहंन्तीचणैर्गुण्यै (१) मंहर्षिभिरहर्दिवम् ।
तोष्टूय्यमानोऽप्य (२) गुणो विभुर्विजयतेतराम् ॥
पूर्वार्द्धे (३) कथितास्तुर्य्यपञ्चमाध्यायवर्त्तिनः ।
प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः ॥

---

हृदब्जे सितपद्मासनां सन्निवेश्य सरस्वतीम् ।
सिद्धान्तकौमुदीशेषभागव्याख्यां समारभे ॥

(१) श्रोत्रियस्य भावः श्रौत्रं श्रोत्रियत्वं हायनान्तयुवादिभ्योऽण् (पा०६५६सू०) इत्यणि श्रोत्रियस्य (यलोपश्चेति युवादि ग०) यलोपे सिद्धम् अर्हतो भावोऽर्हन्ती योग्यता गुणवचनब्राह्मणादिभ्य इति (पा०६५४सू०) ष्यञि अर्हतो नुम् चेति (ब्राह्मणादि ग०) नुमि षित्त्वात् ङीषि सिद्धं ताभ्यां वित्तैः । गुण्यैर्गुणवत्त्वेन प्रशंसनीयैः ।

(२) अपरिभिन्नक्रमेऽगुणोऽपीत्यन्वयस्तेन स्तुतिप्रयोजकीभूतगुणाभावेऽपि स्तुतिविषयतेति विरोधाभासः । तत्परीहारस्तु नियदादिवत् व्यवहारिकगुणवत्त्वात् स्तुत्यता पारमार्थिकगुणाभाववत्त्वाच्च निर्गुणतेति गुणगतवैलक्षण्यात् ।

(३) सङ्गतिं दिदर्शयिषुरतीतकथनपूर्वकं वर्त्तिष्यमाणानाह पूर्वार्द्धे इति हलन्तेषु क्विबादिकथनं तु प्रासङ्गिकमेवमिहापि क्तस्तु णच स्त्रियामञ्

तत्रादौ दश (४) लकाराः प्रदर्श्यन्ते । लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् । एषु पञ्चमो लकारश्छन्दोमात्र-गोचरः ।

**वर्त्तमाने लट् । ३ । २ । १२३ ।**

वर्त्तमानक्रियावृत्ते (५) धातोर्लट् स्यात् । अटावितौ ।

**लः कर्म्मणि च भावे चाकर्म्मकेभ्यः ।३।४।६९।**

---

। (उ४४०पृ०) इत्यादिकथनं तथेति बोध्यम् तथाच प्राधान्येन तृतीया-ध्यायस्था एव प्रत्यया इहोदाह्रियन्ते इति भाव. ।

(४) लकाराणामनुबन्धभेदात् दशविधत्वम् पञ्चमस्य वैदिकत्वेऽपीह स्वरूपतो निदर्शनमात्रम् । मनो० ।

(५) 'क्रियाभेदाय कालस्तु सख्या सर्वस्य भेदिके'ति हर्य्युक्तेः कालस्य क्रिया-विशेषणत्वनियमादाह वर्त्तमानक्रियावृत्तेरिति । एतश्च 'द्योतिका वाचिका वा स्युर्द्वित्वादीना विभक्तय' इत्युक्तेर्द्योतकत्वपक्षमाश्रित्योक्तम् । वर्त्तमानत्वञ्च प्रयोगसमकालयत्नादिहेतुकत्वम् 'क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् । तत् समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्नि'त्युक्तेः । क्रियोत्पत्तौ यो हेतुर्यत्नादिर्यश्च तदर्थ क्रियार्थं विचेष्टितं चेष्टादि कायिकव्यापार तत् द्वय समानकालिकं समीक्ष्य गच्छतीति प्रयुञ्जीतेत्यर्थ. । तथा च प्रयोगस्य गमनार्थकचेष्टादिभिः समकालिकत्व वर्त्तमानत्वमिति फलितम् । वस्तुत फलव्यापारयोरुभयोरपि धात्वर्थतया क्रियाप्रवृत्तौ फलोत्पत्तौ यो हेतुर्धातुवाच्यव्यापाररूप स च यत्नादिसाधारणः प्रयोगस्य तत्समकालिकत्वे एव वर्त्तमानत्वं तेन पङ्गुप्रभृतीना क्रियार्थ-कयत्नादिसत्त्वेऽपि न गच्छतीति प्रयोग । विस्तरस्तु अस्मत्कृतशब्दार्थ-रत्ने द्रष्टव्य ।

लकाराः सकर्मकेभ्यः (६) कर्मणि कर्त्तरि (७) च स्युः अकर्मकेभ्यो भावे कर्त्तरि (८) च ।

**लस्य (९) । ३ । ४ । ७७ ।**

अधिकारोऽयम् ।

**तिप्तस्झिसिप्थस्थ मिब्वस्मस् तातां झ थास् आथां ध्वम् इड् (१०) वहि महिङ् । ३ । ४ । ७८ ।**

---

(६) ल कर्मणीति सकर्मकविषयम्, अकर्मकविषयत्वे कर्मणीत्यस्य बाधितत्वादुत्तरवाक्ये अकर्मकेभ्य इति विशेषाभिधानानुपपत्तेरित्याशयेनाह सकर्मकेभ्य इति ।

(७) चकारात् कर्त्तरि कृदि (३२९८सू०) इत्यतः कर्त्तरीति पदमनुवर्त्त्याह कर्त्तरि चेति ।

(८) भावे चेति चकारेण कर्त्रैवानुकृष्यते न तु सन्निधानपठितमपि कर्म, अकर्मकक्रियायां तदन्वयासम्भवादित्याशयेनाह कर्त्तरि चेति । लकाराणां कर्त्तर्य्येव शक्तिर्न तु कर्तृत्वे इति सिद्धान्त प्रपञ्चस्त्वाकरेऽस्मत्कृतशब्दार्थरत्ने च द्रष्टव्यः । अत्रेदं बोध्यं भावे चाकर्मकेभ्य इत्यंशेऽविवक्षितकर्मकाणामप्यकर्मकपदेन ग्रहणं तेन पच्यते भुज्यते इत्यादिप्रयोगो भाव एव । अतएव लकारा इव क्तोऽपि अकर्मकेभ्य एव भावे विधीयन्ते तथा च भुक्ता ब्राह्मणा इत्यादौ भावे नपुंसके क्ते ततः अर्श आद्यजिति भाष्येऽभिहितं सङ्गच्छते, सङ्गच्छते च कृतपूर्वी कटमित्यादौ अविवक्षितकर्मतया कृधातोर्भावे एव निष्ठेति हर्य्याद्युक्तिरित्यलं विस्तरेण ।

(९) धातोः (३२९७सू०) इत्यधिकारात् धातोर्विहितस्य लकारस्य स्थाने तिबाद्यादेशाः स्युरित्यर्थः । धातोरिति विशेषणात् तद्भिन्नलकारे प्रसङ्गः । दशानां लडादीनां लाभाय लस्येति निरनुबन्धोक्तिः ।

(१०) इटष्टित्करणमिटोऽदिति (३२८८सू०) विशेषार्थं महिङो ङित्त्वन्तु तिङ्

एते अष्टादश लस्यादेशाः स्युः

**लः परस्मैपदम् । १ । ४ । ९९ ।**

लादेशाः परस्मैपदसंज्ञाः स्युः ।

**तङानावात्मनेपदम् । १ । ४ । १०० ।**

तङ् प्रत्याहारः शानच्कानचौ (११) चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः ।

**अनुदात्तङित आत्मनेपदम् । २ । ३ । १२ ।**

अनुदात्तेतः (१२) उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात् ।

---

तङ् प्रत्याहारार्थमेव । स च ङकारः समुदायस्यानुबन्धो न तु महिमात्वस्य तथात्वे पप्रच्छमहे इत्यत्र लिटि सम्प्रसारणाप्रसङ्गेऽपि ङित्त्वेन सम्प्रसारणापत्तिः । म नो० ।

(११) ल इति षष्ठ्यन्तस्यानुवृत्तेर्लादेश एव शानौ गृह्यते इत्याशयेनाह शानच्कानचाविति लादेश इति विशेषणात् ताच्छील्यादिषु चानशि न प्रसङ्गस्तेन शत्रु निघ्नान इत्यादौ परस्मैपदिनोऽपि चानश् । मनो० ।

(१२) अनुदात्त च ङ् च तावितौ यस्येति विग्रह इत्यभिप्रायेणाह अनुदात्तेत इति । तत्र एधस्पर्धादयोऽनुदात्तेत ष्ठूङादयो ङित इ. ३. विवेकः । उपदेशेऽजनुनासिक (८ पृ०) इत्यतोऽनुवृत्तमपि उपदेशे इति पदं ङित एव विशेषणं नान्यस्य फलाभावादित्याशयेनाह उपदेशे इति तथाविशेषणाच्च गाङ्कुटादिभ्य. (७११८ पृ०) इत्यातिदेशिकङित्त्वेऽपि सनि चुकुटिषतीत्यादौ नैतत्प्रसङ्गः । धातोरिति विशेषणाच्च चडङ्भ्यां न प्रसङ्गः ।

**स्वरितञितः कर्त्रभिप्राये क्रियाफले ।१।३।७२।**

स्वरितेतो ञितश्च(१३) धातोरात्मनेपदं स्यात् कर्त्तृगामिनि क्रियाफले।

**शेषात् कर्त्तरि परस्मैपदम् ।१।३।७८।**

आत्मनेपदनिमित्त(१४)हीनाद्धातोः कर्त्तरि परस्मैपदं स्यात्।

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः।१।४।१०१।**

---

(१३) अत्रापि द्वन्द्वात् परतया श्रूयमाणेच्छब्दस्य प्रत्येकसम्बन्धात् स्वरितेतः ञितश्चेत्यर्थः। तत्र स्वरितेतो यजादयः डुकृञादयस्तु ञित इति विवेकः। कर्त्तारमभिप्रैति गच्छतीति कर्मण्यण् (उ२२२पृ०) इत्यणि कर्त्रभिप्रायमिति योगं दर्शयन्नाह कर्त्तृगामिनीति क्रियाफलञ्च क्रियाजन्यमुख्योद्देश्यभूतं फलं तृप्तिस्वर्गादि न तु धात्वर्थमात्रं नापि दक्षिणावेतनादिलाभरूपं यथोक्तं हरिणा।

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।

तत् प्रधानं फलं तासां न लाभादि प्रयोजनमिति ॥

अर्थ्यते इत्यर्थः प्रयोजनापरपर्य्यायः फलं तस्येत्यर्थः। पचादयः फलावच्छिन्नव्यापाररूपा पचाप्रभृतिक्रिया। तासां पचाप्रभृतिक्रियाणां फलं स्वेच्छया तदिच्छाप्रयोजकं तेन याजकपाचकादीनां दक्षिणावेतनादिलाभरूपप्रयोजनवत्त्वेऽपि तदर्थक्रियावृत्तेर्धातोर्न प्रसङ्गः।

(१४) आत्मनेपदनिमित्तम् अनुदात्तेत्त्वं, ङित्त्वं स्वरितञितो कर्त्रभिप्रायक्रियाफलत्वञ्च तद्विहीनादिति शेषादित्यस्यार्थः। एतच्च "नेर्विशः" (उ२४१पृ०) इत्यादिविधिविषयविभिन्नाऽपोद्यते इति बोध्यम्।

तिङ उभयपदयो(१५) स्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः।

**तान्येकवचनद्विवचनबहुवचनान्येकशः। १। ४। १०२।**

लब्धप्रथमादिसंज्ञानि तिङ्स्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः।

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। १। ४। १०५।**

तिङ्वाच्यकारकवाचिनि युष्मदि अप्रयुज्यमाने (१६) प्रयुज्यमाने च मध्यमः स्यात्।

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च। १। ४। १०६।**

मन्यधातुरुपपदं यस्य धातोस्तस्मिन् प्रकृतिभूते (१७) सति

---

(१५) तिङोऽष्टादशत्वेन षट्त्रिकात्मकत्वात् यथासंख्यं प्रथमादिसंज्ञाऽसम्भवादाह उभयपदयोरिति।

(१६) स्थानिनीति पदं व्याख्यातुमाह अप्रयुज्यमाने इति। समानाधिकरणे इत्युक्ते त्वां पश्यति त्वया दृश्यते इत्यादौ द्वितीयातृतीयाभ्यामाश्रयस्य बोधनेऽपि तस्य धातूत्तरतिङर्थत्वाभावात् नाभेदान्वयोऽतोऽत्र युष्मदर्थस्य सामानाधिकरण्याभावेन न मध्यमपुरुषः। अत्र समानाधिकरणे इति निर्देशात् कर्त्रर्थेन लकाराणां शक्तिरिति स्पष्टं प्रतीयते कर्तृत्वे शक्तौ युष्मदर्थस्य सत्त्वे तस्य सामानाधिकरण्यासम्भव इति बोध्यम्।

(१७) मन्योपपदे इत्यस्य सप्तम्यन्ततया तदानुगुण्येन व्याचष्टे प्रकृतिभूते इति तथाभूताद्धातोरुत्तर स्यादिति तु फलितार्थः।

मध्यमः स्यात् परिहासे मन्यतिस्तूत्तमः स्यात् स चैकार्थस्य वाचकः ।

**अस्मद्युत्तमः । १ । ४ । १०७ ।**

तथाभूते (१८) अस्मद्युत्तमः स्यात् ।

**शेषे प्रथमः । १ । ४ । १०८ ।**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू सत्तायाम् । कर्त्तरि विवक्षायां भू तिप् इति स्थिते ।

**तिङ्शित् सार्वधातुकम् । ३ । ४ । ११३ ।**

तिङः शितश्च धात्वधिकारोक्ता (१९) एतत्संज्ञाः स्युः ।

**कर्त्तरि शप् । ३ । १ । ६८ ।**

कर्त्रर्थे (२०) सार्वधातुके परे धातोः शप् स्यात् । शपावितौ ।

**सार्वधातुकार्द्धधातुकयोः । ७ । ३ । ८४ ।**

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ।

---

(१८) तथाभूते इति तिङ्वाच्यकारकवाचिनि अप्रयुज्यमाने प्रयुज्यमाने चेत्यर्थः ।

(१९) धात्वधिकारोक्ता इति विशेषणात् हरीनित्यादौ शस शित्त्वेन सार्व-धातुकत्वे सार्वधातुकमपिदिति (७२२पृ०) ङित्त्वप्रसक्त्या घेर्ङितीति (१०९पृ०) न गुणप्रसङ्गः ।

(२०) शपोऽधिकरणत्वेन निरर्थकतया कर्त्रर्थकत्वाभावात् सार्वधातुके यक (७२६६पृ०) इत्यतोऽनुवृत्तस्य सार्वधातुकस्यैव कर्त्तरीत्यस्य वैयधि-करण्येन विशेषणत्वमित्याह कर्त्रर्थे इति ।

### झोऽन्तः । ७ । १ । ३ ।

प्रत्ययावयवस्य (२१) झस्यान्तादेशः स्यात् । अतो गुणे (पृ॰८८पृ॰) (२२) । भवन्ति । भवसि । भवथः । भवथ ।

### अतो दीर्घो यञि । ७ । ३ । १०१ ।

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके (२३) परे । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । अहं भवामीत्यादि । एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः । एतम् एत वा मन्ये ओदनं भोक्ष्येथे भोक्ष्यध्वे भोक्ष्ये भोक्ष्यावहे भोक्ष्यामहे इत्यादि मन्यसे मन्येथे मन्यध्वे इत्यर्थः । युष्मद्युपपदे (३६पृ॰) इत्याद्यनुवर्त्तते तेनेह न । एतु भवान् मन्यते ओदन भोक्ष्य इति । प्रहासे किं यथार्थकथने मा भूत् । एहि मन्यसे ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरित्यादि ।

### परोक्षे (२४) लिट् । ३ । २ । ११५ ।

---

(२१) आयनेयीनि (पृ॰२१८पृ॰) सूत्रात् प्रत्ययपदमनुवर्त्तते इत्याशयवानाह प्रत्ययावयवस्येति ।

(२२) स्थानिझकारमाश्रित्य अतो दीर्घो यञीत्यस्य न प्रवृत्तिरल्विधाविति (३३पृ॰) निषेधादाह अतो गुणे इति ।

(२३) तङस्तुगस्यम॰ सार्वधातुके (३११४पृ॰) इत्यतः सार्वधातुके इत्यनुवृत्तम् अन्यथा केशव इत्यादौ वादौ तद्धिते यञादित्वेन दीर्घापत्तिः ।

(२४) यद्यपि "क्रिया नामात्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति" भाष्योक्तेः सर्वासां क्रियाणां परोक्षत्वं तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। तस्य तिबादयः।

**लिट् च। ३। ४। ११५।**

लिडादेशस्तिङार्द्धधातुकसंज्ञ एव स्यात् न तु सार्वधातुकसंज्ञः तेन शबादयो न।

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः। ३। ४। ८२।**

लिटस्तिबादीनां नवानां णलादयो नव स्युः। भू णल् इति स्थिते।

**भुवो वुग् लुङ्लिटोः। ६। ४। ८८।**

भुवो वुगागमः स्यात् लुङ्लिटोरचि (२५)। नित्यत्वात् वुंग् गुणवृद्धी बाधते।

**एकाचो द्वे प्रथमस्य। ६। १। १।**

**अजादेर्द्वितीयस्य। ६। १। २।**

इत्यधिकृत्य।

**लिटि धातोरनभ्यासस्य। ६। १। ८।**

---

पारोक्ष्यापारोक्ष्याभ्यां क्रियाणां तथात्वे द्रष्टव्ये। स्वव्यापारस्य वर्त्तमानतादशायामपि व्यासङ्गादिना स्वयं तदप्रतिसन्धाने अहं पपाचेति प्रयोगो भवत्येव मत्तादिक्रियावस्था अपि पारोक्ष्य-सम्भवात् इत्यत्र बहु जगद पुरस्तात् तस्य मत्ता किलाहमित्यादि-प्रयोगः। मनो०।

(२५) अचि श्नुधातुभ्रुवा(पू०११८पृ०)मित्यतोऽचीत्यनुवर्त्तते तेन अभूदित्यादौ न।

लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः आदिभूतादचः (२६) परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते।

**पूर्वोऽभ्यासः। ६। १। ४।**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्।

**हलादिः शेषः। ७। ४। ६०।**

अभ्यासस्यादिर्हल् शिष्यते अन्ये (२७) हलो लुप्यन्ते। इति वलोपः।

**ह्रस्वः। ७। ४। ५९।**

अभ्यासस्याचो ह्रस्व स्यात्।

**भवतेरः। ७। ४। ७३।**

भवतेरभ्यासोकारस्य अः (२८) स्यात् लिटि।

---

(२६) अजादेरिति न बहुव्रीहेः षष्ठी, तथात्वे इन्दिद्रीयिषतीत्यादौ इन्भागस्याजादित्वेन ततो द्वितीयस्य दकारस्य नन्द्रा इति (उ॰१५सू॰) द्वित्वनिषेधापत्तेः किन्तु कर्मधारयात् पञ्चमीत्याशयेनाहादिभूतादच इति।

(२७) अन्ये अनादिभूता हल इत्यर्थस्तेन आटतुरित्यादौ टकारस्यानादित्वेऽपि लोपः। तथाच क्वचिदभ्यासस्य आदेर्हलः सत्त्वमाश्रित्य सर्वत्रामादेर्लोप इति बोध्यम्।

(२८) अत्र लोपोऽभ्यासस्येत्यतोऽभ्यासस्य (उ२०१सू॰) इत्यनुवर्त्तते। श्तिपा निर्देशात् कर्त्तर्य्येवायं विधिरिति प्राञ्चः। उपसर्गात् सुनोतीत्यादाविव (उ२७सू॰) धातुनिर्देशविवक्षितेन श्तिपा निर्देशात् भावकर्मणोरपि अतो "विभावरीभिर्बिभराम्बभूविरे इत्यादि सिद्धमिति नव्याः एव च मतभेदात् विकल्प इति सम्प्रदायविदः।

## अभ्यासे चर्च। ८।४।५४।

अभ्यासे झलाञ्चरः स्युर्जशश्च (२८)। झशाञ्जशः (३०)। खयां चरः। तत्रापि प्रकृतिजशाम्प्रकृतिजशः प्रकृतिचराम् प्रकृतिचर इति विवेकः आन्तरतम्यात्।

## असिद्धवदत्राभात् (३१)। ६।४।२२।

इत ऊर्द्ध्वम् आ पादपरिसमाप्तेराभीयम्। समानाश्रये तस्मिन् कर्त्तव्ये तदसिद्धं स्यात्। इति वुकोऽसिद्धत्वादुवङि प्राप्ते। वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ *। बभूव। बभूवतुः। बभूवुः।

---

(२८) झला जश् झशि(पृ०२६पृ०) इत्यतो झलामित्यनुवर्त्तते चकारात् जशनुकृष्यते इत्याह जशश्चेति।

(३०) झन्षु जश्.स्थानेऽपि चरापत्तिमाशङ्क्य विषयभेदमाह झशामिति।

(३१) इत एतत्सूत्रात् ऊर्द्ध्वं पादसमाप्तिपर्य्यन्तमधिकारस्तद्योतकश्चा भादिति (भस्य (पृ०१०५पृ०) इत्यधिकारमभिव्याप्येति तदर्थः भाधिकारसमाप्तेश्च पादसमाप्तेस्तदन्ताधिकार इति फलितम्। समानाश्रयमाभीयम् एतदवधिभाधिकारपर्य्यन्तविधायकशास्त्रम् अत्र समानाश्रये च्याभीये कर्त्तव्ये असिद्धवद्भवति न प्रवर्त्तते इत्यर्थः। यथा एधि शाधीत्यादौ एत्वशादेशयोराभीयत्वेनासिद्धतया झलन्तत्वमाश्रित्य धित्वम्। असति चात्र सूत्रे तस्य झलन्तत्वभावाच्च धित्वं स्यात्। आभात् किम् अभाजीत्यादौ नलोपस्याभीयत्वाभावेन वृद्धौ न तस्यासिद्धत्वम्। सूत्रे अत्रेति किम् पपुषः चिक्युषः नुनुवुष इत्यादौ वसोः संप्रसारणम् आलोपादौ कर्त्तव्ये नासिद्धं तत्र वसुनिमित्तं संप्रसारणम् आलोपादिकन्तु विभक्तिनिमित्तमिति भिन्नाश्रयत्वम्। एवञ्च प्रकृते अचि श्नुकि इत्यतो उवङि कर्त्तव्ये तस्यासिद्धत्वमिति तत्सिद्धत्वाविधानार्थोऽयमारम्भः।

आर्द्धधातुकस्येड्वलादेः। ७। २। ३५।

वलादेरार्द्धधातुकस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

अनद्यतने लुट्। ३। ३। १५।

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात्।

स्यतासी लृलुटोः। ३। १। ३३।

लृ इति लृङ्लृटोर्ग्रहणम् धातोः स्यतासी एतौ प्रत्ययौ स्तः लृलुटोः परतः। शबाद्यपवादः।

आर्द्धधातुकं शेषः। ३। ४। ११४।

तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात्। इट्।

लुटः प्रथमस्य डारौरसः। २। ४। ८५।

डारौरस एते क्रमात् स्युः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः।

पुगन्तस्य लघूपधस्य च। ७। ३। ८६।

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुकार्द्धधातुकयोः। येन नाव्यवधानन्तेन व्यवहितेऽपि वचनप्रामाण्यात् तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः। भवि ता भ्य भवेको गुणे प्राप्ते।

दीधीवेवीटाम्। १। १। ६।

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। भविता।

**तासस्त्योर्लोपः। ७। ४। ५०।**

तासेरस्तेश्च सलोपः स्यात् सादौ प्रत्यये परे।

**रि च। ७। ४। ५१।**

रादौ प्रत्यये प्राग्वत्॰(३२)। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

**लृट् शेषे च। ३। ३। १३।**

भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायामसत्यां (३३) सत्यां च। स्य इट्। भविष्यति। भविष्यतः। भविष्यन्ति भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।

**लोट् च। ३। ३। १६२।**

विध्यादिष्वर्थेषु लोट् स्यात्।

**आशिषि लिङ्लोटौ। ३। ३। १७३।**

---

(३२) प्राग्वत् तासेर्लोप इत्यर्थः अस्तास्तिरिति न संबध्यते ततो रादिप्रत्ययासम्भवात्।

(३३) तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति (३।३।१०) सूत्रोक्तस्य. घेक इत्याद्यनेनाह सत्यामिति चकारलभ्यार्थमाह सत्याञ्चेति।

**एरु: । ३ । ४ । ८६ ।**

लोट इकारस्य उ: स्यात् । भवतु ।

**तुह्योस्तातङाशिष्यन्यतरस्याम । ७।१।३५ ।**

आशिषि तुह्योस्तातङ् वा स्यात् । अनेकाल्त्वात् सर्वादेश: । यद्यपि ङिच्च (पृ०२८पं०) इत्ययमपवादस्तथाप्यनन्यार्थङित्स्वेष्वन ङादिषु चरितार्थ इति ‡ गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतय सम्भवत्प्रयोजनङकारे तातङि मन्यरम्प्रवृत्त: परेण बाध्यते इहोत्सर्गापवादयोरपि समबलत्वात् । भवतात् ।

**लोटो लङ्वत् । ३ । ४ । ८५ ।**

लोटो लङ(२४) इव कार्य्यं स्यात् । तेन तामादय: सलोपश्च तथाहि ।

**तस्थस्थमिपान्तान्तन्ताम: । ३ । ४ । १०१ ।**

ङितश्चतुर्णामेषां (२५) तामादय: क्रमात् स्यु: ।

**नित्यं ङित: । ३ । ४ । ९९ ।**

---

‡ अपवादो यद्यन्यत्र चरितार्थस्तर्हि परान्तराङ्गाभ्या बाध्यते इति न्याय

(२१) पृष्ठे उक्तोऽत्र मूलम् ।

(२४) लोट इत्युपमेये षष्ठीनिर्देशेनोपमानेऽपि षष्ठ्यन्ताद्वतिरित्याह लङ इवेति तेन लङादिनिमित्तावाड़ाटौ नातिदिश्येते तयोर्लङ्स्याङ्गिकत्वा भावात् ।

(२५) चतुर्णामेषां तस्थस्थमिपां स्थाने क्रमात् ताम् तम् त अम् इत्येते

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात्। अलोऽन्त्यस्येति (पृ०२८४०) संस्य लोपः। भवताम्। भवन्तु।

**सेर्ह्यपिच्च। ३। ४। ८७।**

लोटः सेर्हिः स्यात् सोऽपिच्च।

**अतो हेः। ६। ४। १०५।**

अतः परस्य हेर्लुक् स्यात्। भव भवतात्। भवतम्। भवत।

**मेर्निः। ३। ४। ८९।**

लोटो मेर्निः स्यात्।

**आडुत्तमस्य पिच्च। ३। ४। ९२।**

लोडुत्तमस्याडागमः स्यात् स पिच्च। हिन्योरुत्वन्न इकारोच्चारणसामर्थ्यात्। भवानि। भवाव। भवाम।

**अनद्यतने‡ लङ्। ३। २। १११।**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात्।

**लुङ्लङ्लृङ्क्ष्वडुदात्तः। ६। ४। ७१।**

एषु परेष्वङ्गस्याडागमः स्यात् स चोदात्तः।

**इतश्च। ३। ४। १००।**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात्। अभवत्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम।

---

‡ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये इति वार्त्तिकमनुसृत्य अरुणद्यवनः साकेतमरुणद्यवनो माध्यमिकानिति भाष्यकार उदाजहार।

**विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् । ३ । ३ । १६१ ।**

एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् । विधिः प्रेरणम् भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् । निमन्त्रणं नियोगकरणम् आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टं सत्कारपूर्वको व्यापारः । प्रवर्त्तनायां लिङ् चतुर्णां पृथगुपादान प्रपञ्चार्थम् (२६) ।

**यासुट् परस्मैपदेषूदात्तो ङिच्च । ३ । ४ । १०३ ।**

लिङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तो ङिच्च । ङित्त्वोक्तिर्ज्ञापयति क्वचिदनुबन्धकार्य्येऽप्यनल्विधाविति (पृ० २३) प्रतिषेध इति । आदेशस्य शानचः (उ१६५पृ०) शित्त्वमपीह लिङ्गम्

**सुट् तिथोः । ३ । ४ । १०७ ।**

लिङस्तकारथकारयोः सुट् स्यात् । सुटा यासुट् न बाध्यते लिङो यासुट्, तकारथकारयोः सुडिति विषयभेदात् ।

**लिङः सलोपोऽनन्त्यस्य । ७ । २ । ७९ ।**

---

(२६) "अस्ति प्रवर्त्तकरूपमनुरूपं चतुर्ष्वपि तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षये"त्याक्षिप्य "शिष्यव्युत्पादनार्थं वा प्रपञ्चार्थमथापि" चेति हर्य्युक्तिमनुसृत्याह प्रपञ्चार्थमिति । विध्यादिभिः कर्त्रादयोऽर्था न बाध्यन्ते विरोधाभावात् त. कर्मणीति (उ२पृ०) बहुवचननिर्देशाच्च ।

सार्वधातुकतिङोऽनन्त्यस्य सस्य (३७) लोपः स्यात्। इति सकारद्वयस्यापि (३८) निवृत्तिः। सुटः श्रवणं त्वाशीर्लिङि स्फुटतरन्तु (३९) तत्रात्मनेपदे।

**अतो येयः। ७। २। ८०।**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् स्यात्। गुणः। यलोपः। भवेत्। सार्वधातुकेति किम् चिकीर्ष्यात्। मध्येऽपवाद (४०) न्यायेन हि अतो लोप (३५ १पृ०) एव बाध्यते। भवेदित्यादौ तु परत्वाद्दीर्घः (४१) स्यात्। भवेताम्।

**झेर्जुस्। ३। ४। १०८।**

लिङो झेर्जुस् स्यात्। ज इत्।

**उस्यपदान्तात्। ६। १। ९६।**

अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात्। इति प्राप्ते

---

(३७) अनन्त्यस्येतिविशेषणयोगाय सूत्रे सेति लुप्तषष्ठीकं पृथक्पदमित्याशयेनाह सस्येति।

(३८) सकारद्वयस्येति अवयवावयवस्य समुदायं प्रत्यवयवतया सुटोऽपि लिङवयवत्वादिति भावः। मनो०।

(३९) भूयादित्यादौ यासुटः सकारस्य स्कोरिति (प०१६६पृ०) सलोपेनाश्रवणादाह स्फुटतरन्त्विति।

(४०) सार्वधातुकाननुवृत्तौ व्याघातमाह मध्येऽपवादेति तद्बाधेन च अतो येय इति स्यादिति भावः।

(४१) अनिष्टान्तरमाह दीर्घ इति अतो दीर्घो यञीति(३८पृ०)सूत्रविहित इत्यर्थः।

परत्वान्नित्यत्वाच्चातो येय इति प्राप्ते:। यद्यप्यन्तरङ्गत्वात् (४२) पररूपं न्याय्यं तथापि यासुड़ित्येतस्य इय् इति व्याख्येयम्। एवञ्च सलोपस्यापवाद इय्। अतो येयइत्यत्र तु सन्धि-राषे:। भवेयु:। भवे:। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

## लिङाशिषि। ३। ४। ११६।

आशिषि लिङस्तिङार्धधातुकसंज्ञ: स्यात्।

## किदाशिषि (४३)। ३। ४। १०४।

आशिषि लिङो यासुट् कित्स्यात्। स्कोरिति (पृ०१६६ष्ठ०) सलोप: ४४)।

## क्ङिति च। १। १। ५।

गित्किन्ङिन्निमित्ते इग्लक्षणे (४५) गुणवृद्धी न स्त:। भूयात् (४६)। भूयास्ताम्। भूयासु:। भूया:। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म।

---

(४२) अन्तरङ्गत्वादिति प्रत्ययमात्रापेक्षतयाऽन्तरङ्गकार्य्यत्वादित्यर्थ:।

(४३) ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे इज्यादित्यादौ संप्रसारणार्थं कित्त्व करणमिति बोध्यम्।

(४४) संयोगादित्वेन यासुट: सलोप:, झुटस्तु (उ०१६ष्ठ०) पदान्तसंयोगान्त-त्वेनेति भेद:।

(४५) इग्लक्षणे इति इको गुणवृद्धी इति (पृ०२५ष्ठ०) परिभाषया इक एव-तयो। स्थानित्वमतस्तल्लक्षणात्वम्।

(४६) भूयादिति इह स्कोरिति (पृ०१६६ष्ठ०) सलोपस्यासिद्धत्वात् संयोगान्त-तकारलोप: प्राप्तोऽपि पदान्तसंयोगादिलोपेनानवकाशेन बाध्यते। मनो०।

लुङ्। ३। २। ११०।

भूतार्थे धातोर्लुङ् स्यात्।

माङि लुङ्। ३। ३। १७५।

सर्वलकारापवादः।

स्मोत्तरे लङ् च। ३। ३। १७६।

स्मोत्तरे माङि लङ् स्याल्लुङ् च।

च्लि लुङि। ३। १। ४३।

शबाद्यपवादः।

च्लेः सिच्। ३। १। ४४।

इचावितौ (४७)।

गाति (४८) स्थाघुपाभूभ्यः सिचः परस्मैपदेषु। २। ४। ७७।

एभ्यः सिचो लुक् स्यात्। गापाविहेणादेशपिबती गृह्येते।

भूसुवो (४९) स्तिङि। ७। ३। ८८।

भूसू एतयोः सार्वधातुके तिङि परे गुणो न स्यात्।

---

(४७) सिच इदित्त्वेन अमंस्तेत्यादौ अनिदितामिति (पृ०१७८पृ०) उपधालोपाभावः।

(४८) विकरणशून्यतया गातीति श्तिपा, निर्देशात् इणादेशो गृह्यते। मनो०।

(४९) सूञ गर्भविमोचने इत्यस्यैव ग्रहणं न तु सुवतिसूयत्योरपि। मनो०।

### अस्तिसिचोऽपृक्ते। ७। ३। ९६।

सिच् अस् चेति (५०) समाहारद्वन्द्वस्सिच्छब्दस्य सौत्रमत्वम् अस्तीत्यव्ययेन कर्मधारयः ततः पञ्चम्याः सौत्रो लुक्। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात्। इति ईट् न, इह सिचो लुप्तत्वात्। अभूत्। हलः किम्। ऐधिषि। अपृक्तस्येति किम् ऐधिष्ट। अभूताम्।

### सिजभ्यस्तविदिभ्यश्च। ३। ४। १०९।

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात्। इति प्राप्ते।

### आतः। ३। ४। ११०।

सिज्लुक्यादन्तादेव (५१) झेर्जुस् स्यात्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

### न माङ्योगे। ६। ४। ७४।

अडाटौ न स्तः। मा भवान् भूत्। मास्म भवत् भूत्।

### लिङ्निमित्ते लृङ् क्रियातिपत्तौ। ३। ३। १३९।

---

(५०) अस्तेः सिचश्च परस्येति व्याख्याने अस्तेर्भूरिति (३।११२सू०) भुवादेशो गातीत्यादिना (३।९८सू०) सिचो लुकि स्थानिवद्भावेन अस्तिसिचोः सद्भावादीडापत्तिरतो व्याचष्टे सिच् अस् चेति उक्तस्थलयोः अस्तिसिचोर्वर्त्तमानत्वाभावात् न ईट्प्रसङ्ग इति भावः।

(५१) पूर्वसूत्रेण सिद्धे नियमार्थमिदमित्याह आदन्तादेवेति।

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियायाः अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम।

**ते प्राग्धातोः। १।४।८०।**

ते गत्युपसर्गसंज्ञका धातोः प्रागेव (५२) प्रयोक्तव्याः।

**आनि लोट्। ८।४।१६।**

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात्। प्र-भवाणि। दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः *। दुःस्थितिः। दुर्भवानि। अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् *। अन्तर्द्धा। अन्तर्द्धिः। अन्तर्भवाणि।

**शेषे विभाषाऽकखादावषान्त उपदेशे। ८।४।१८।**

उपदेशे कादिखादिषान्तवर्जे गदनदादे (५३) रन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात्। प्र-णि-भवति प्र-नि-भवति। इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या तदुक्तम्।

---

(५२) प्रागेवेति न परतो नापि व्यवहिता इत्यर्थः अतएव छन्दसि परेऽपीति (उ४८०सू०) व्यवहिताश्चेति(उ४८०सू०)पृथक् सूत्रिते। मनो०।

(५३) नेर्गदनदेति (उ०४१सू०) सूत्रापेक्षया शेष इत्याह गदनदादेरिति उपदेशे किं प्र-णि-चकार प्र-नि-चखादेत्यादौ कृतचुत्वेऽपि यथा निषेधः स्यात्।

संहितैकपदे नित्या नित्या धातूपसर्गयो:।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते, इति ॥

सत्ताद्यर्थनिर्देशोपलक्षणम् यागात्सर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात्। उपसर्गास्त्वर्थविशेषस्य द्योतकाः। प्र-भवति परा-भवति सम्भवति अनु भवति अभि भवति उद्भवति परि-भवतीत्यत्र विलक्षणार्थावगतेः। उक्तञ्च।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहारसंहारविहारपरिहारवदिति ॥

एध वृद्धौ। (उ२५पृ०) कथ्यन्ताः षट्त्रिंशदनुदात्तेतः।

## टित आत्मनेपदानां टेरे। ३। ४। ७९।

टितो लस्या (५४) त्मनेपदानां टेरेत्वं स्यात्। एधते।

## सार्वधातुकमपित्। १। २। ४।

अपित्सार्वधातुकं ङिद्वत्स्यात्।

## आतो ङितः। ७। २। ८१।

अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते।

## थासस्से। ३। ४। ८०।

टितो लस्य थासस्से स्यात्। एधसे। एधेथे। एधध्वे। अतो-गुणे (पू०८८पृ०)। एधे। एधावहे। एधामहे।

(५४) टित इति लस्यैव विशेषणं न तदादेशानामजादेरित्याह लस्येति तेन यजमानेत्यादौ नेति भाव.।

## इजादेश्च गुरुमतोऽनृच्छः। ३। १। ३६।

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्यात् लिटि। आमो मकारस्य नेत्वम् आस्कासोराम्विधानात् ‡ म्रापकात्।

### आमः। २। ४। ८१।

आमः परस्य लुक् स्यात्।

## कृञ्चानु प्रयुज्यते लिटि। ३। १। ४०।

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनु (५५) प्र-युज्यन्ते। आम्प्रत्ययवत् कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञाप्यते। तेन कृभ्वस्तियोग इत्यतः (पृ०७२६प०) कृञो द्वितीयेति (पृ०७३२प०) ञकारेण प्रत्याहाराश्रयणात् कृभ्वस्तिलाभः। तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः (५६)। सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्र युज्यते। कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते।

## आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य। १। ३। ६३।

---

‡ मित्त्वादन्त्यादच परस्मिन् आकारेण भवितव्यम्। आस्कासोस्तु स्वतएव आकारसत्त्वात् अन्त्यादच पर आकारविधानं व्यर्थं स्यादिति नेत्त्वमिति भावः।

(५५) प्र-युज्यते इत्यनेनैव प्रयोगे लब्धेऽनुपदोपादानं विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चेति वार्त्तिककाराशयस्तेन 'त पातया प्रथममास'-त्यादिकमपाणिनीयमिति मल्लिनाथः।

(५६) अभेदान्वय इति तेन आम्प्रकृतिधातोः सकर्मकत्वाकर्मकत्वाभ्यां कर्तृभावयोर्लकारः अतः "तस्यातपत्र बिभराम्बभूवे" इति, "तमर्तुपर्णोऽपि

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रत्यया तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात्। इह पूर्ववदित्यनुवर्त्य वाक्यभेदेन सम्बध्यते। पूर्ववदेवात्मनेपदं नतु तद्विपरीतमिति। तेन कर्त्तर्य्यपि फले इन्दाञ्चकारेत्यादौ न तङ्।

## लिटस्तझयोरेशिरेच्। ३। ४। ८१।

लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः। एकारोच्चारणं ज्ञापकं तङादेशानां टेरेत्वन्नेति तेन डारौरसान्न। कृ ए इति स्थिते।

## असंयोगाल्लिट् कित्। १। २। ५।

असंयोगात्परोऽपिल्लिट् कित्स्यात्। क्ङिति चेति (३१८सू०) निषेधात्सार्वधातुकार्द्धधातुकयोरिति (३७सू०) गुणो न। द्वित्वात्परत्वाद्यणि प्राप्ते।

## द्विर्वचनेऽचि। १। १। ५९।

द्वित्वनिमित्ते (५७) ऽचि परे अच आदेशो न स्यात् द्वित्वे कर्त्तव्ये ५८)।

मेदसम्भरा विभावरीभिर्बिभराम्बभूविरे" इत्यादौ च कर्मणि लकारः। इति द्रष्टव्यम्।

(५७) द्विर्वचनशब्दस्य द्वित्वनिमित्ते लक्षणा विनाचा सामानाधिकरण्यासम्भवादाह द्वित्वनिमित्ते इति तन्निमित्तत्वञ्च साक्षात् परम्परया वा समुदायघटकत्वेन बोध्यम् तेन ऊर्णुनविषतीत्यादौ सनुस्थानिकस्य टोऽपि समुदायघटकतया तन्निमित्तत्वात् गुणकार्य्यात् प्रागेव द्वित्वम्। अचीति किं दुद्यूषतीत्यादौ द्वित्वनिमित्तेऽपि सनि तस्याजादित्वाभावात् ऊठ् भवत्येव।

(५८) द्वित्वे कर्त्तव्ये इति कृते तु द्वित्वे यथायथमजादेशः स्यादेवेतिभावः।

**उरत्। ७। ४। ६६।**

अभ्यासऋवर्णस्य अत् स्यात् प्रत्यये परे। रपरत्वम् (पृ०४२सू० सू०) हलादिः शेषः (उ०१०सू०)। प्रत्यये किम्। वव्रश्च (५९)।

**कुहोश्चुः। ७। ४। ६२।**

अभ्यासकवर्गहकारयोश्चवर्ग आदेशः स्यात्। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे।

**एकाच उपदेशेऽनुदात्तात्। ७। २। १०।**

उपदेशे यो धातुरेकाच् अनुदात्तश्च ततः परस्यार्द्धधातुकस्येड् न स्यात्। उपदेशे इत्युभयान्वयि। एकाच इति किम्। यङ्लुग्व्यावृत्तिर्यथा स्यात्। स्मरन्ति हि।

'श्तिपा (६०) शपानुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकीति'॥

---

(५९) लिटि संप्रसारणे संप्रसारणाच्च (पृ१४८सू०) इत्येकादेशात् पूर्वं प्रत्ययभिन्ने अभ्यासावयवेऽति अत्त्वं स्यात् तथा च रपरतया वरव्रश्चेत्यनिष्टापत्तिरिति भावः।

(६०) प्र नि जङ्घन्तीत्यादौ यङ्लुकि नेर्गदेत्यादिना (उ४१सू०) न णत्वम् श्यतिहन्तियातीत्यादौ श्तिपा निर्देशात्। सनीवन्तर्द्धेतिसूत्रे (उ०२७०सू०) भरेति शपा निर्देशात् बिभर्त्तेः स्भो विकल्पेट्कत्वमिव न ततो यङ्लुकः सनः। अनुबन्धेन निर्देशो द्विविधः स्वरूपेण इत्संज्ञकत्वेन च। तत्र स्वरूपेण यथा शीङः सार्वधातुके गुणः (उ११४सू०) इत्युक्तं कार्य्यं शेशीत इत्यादौ न। इत्संज्ञकत्वेन यथा अनुदात्तङित इति(उ४सू०)ङित्त्वेन विहितस्तङ् पास्पर्द्धीति शेशयीतीत्यादौ न। गणेन यथा रुधादिभ्यः श्नम् (उ१५८सू०) इतिविहितः श्नम् बेभिदीतीत्यादौ न। एकाज्ग्रहणं यथा अत्रैव सूत्रे तेन भिदेरनिट्-

एतच्च (६१) इहैवैकाज्ग्रहणेन ज्ञाप्यते। अत्र इत्येवैकत्वविवक्षया तद्दतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशोऽत्रावर्त्स्यति तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः आदेशो पदेशेऽनेकाच्कत्वात्। अनुदात्तश्चानुपदमेव (७०२८पृ०) सग्रहीष्यन्ते। एधाञ्चकृषे। एधाञ्चक्राथे।

**इणः षीध्वंलुङ्लिटान्धोऽङ्गात्। ८। ३।७८।**

इणन्तादङ्गात्परेषां (६२) षीध्वंलुङ्लिटां धस्य मूर्द्धन्यः स्यात्। एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव (६३)। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न अन्यथा हि कृञ् चानु प्रयुज्यत इति (७०२२पृ०सू०) कृभ्वितिं वा ब्रूयात्।

**अत आदेः। ७। ४। ७०।**

अभ्यासस्यादेरतो दीर्घः स्यात्। (पृ०८८पृ०सू०) पररूपापवादः। एधामास। एधामासतुरित्यादि। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे।

---

कत्वेऽपि केभिदितेत्यादौ नानिट्कत्वम्।

(६१) एतच्चेति एकाज्ग्रहणस्यानन्यफलकतया यङ्लुग्व्याप्तिरेव फलमत एकाज्ग्रहणेनैकदेशानुमितन्ययात् श्रुतिबादिनिर्देशस्याऽपि तत्फलकत्वमित्यनुमितमिति भाव।

(६२) अङ्गात् परेषामिति। विहितानामिति तु नोक्तं तथा सति अदिढ्वमित्यादौ न स्यात् लिहदुहनहां ढत्वघत्वधत्वेषु लिढ्वीध्वं धुक्षीध्वं नत्सीध्वमित्यादौ तु स्यात्। अङ्गात् किं वेविषीध्वमित्यादौ जुहोत्यादेर्विषे सार्वधातुके लिङि यथा न स्यात् अनिनस्मन्ग्रहणा नीत्याद्युक्ते (पृ०१५६पृ०) अर्थवत्परिभाषाया अनित्यत्वज्ञापनात्।

(६३) एधाम्बभूवेति आमप्रत्ययवदितिसूत्रे (७२२पृ०) कृञ्ग्रहणादनु-

**धि च। ८। २। २५।**

धादौ प्रत्यये परे सलोपः स्यात्। एधिताध्वे।

**ह एति। ७। ४। ५२।**

तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते।

**आमेतः। ३। ४। ९०।**

लोट एकारस्याम् स्यात्। एधताम्। एधेताम्। एधन्ताम्।

**सवाभ्यां वामौ। ३। ४। ९१।**

सवाभ्यां परस्य लोडितः क्रमाद् व अम् एतौ स्तः। एधस्व। एधेथाम्। एधध्वम्।

**एत ऐ। ३। ४। ९३।**

लोडुत्तमस्य एत ऐ स्यात्। आमोऽपवादः। एधै। एधावहै। एधामहै।

**आडजादीनां। ६। ४। ७२।**

अजादीनामाट् स्यात् लङादिषु। अटोऽपवादः। आटश्च (पृ०११७पं०) ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि।

---

प्रयोगान्तरे न तङिति न्यापितं तेन तत्र शेषात् कर्त्तरीति (उ५पृ०) परस्मैपदमेव भावकर्मणोस्तु तङेवेति (उ२३पृ०) प्रागुक्तम्।

**लिङः सीयुट्। ३।४।१०२।**

लिङात्मनेपदस्य सीयुडागमः स्यात्। सलोपः (६४)। एधेत। एधेयाताम्।

**झस्य रन्। ३।४।१०५।**

लिङो झस्य रन् स्यात्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्।

**इटोऽत्। ३।४।१०६।**

लिङादेशस्येटोऽत्स्यात्। एधेय। एधेवहि। एधेमहि। आशीर्लिङि आर्द्धधातुकत्वात् लिङः (उ०१६पृ०) सलोपो न। सीयुट्सुटोः प्रत्ययावयवत्वात् षत्वम्। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्।

**आत्मनेपदेष्वनतः। ७।१।५।**

अनकारात्परस्यात्मनेपदेषु झस्य अत् (६५) इत्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। इणः षीध्वंलुङ्लिटाम्धोऽङ्गात् (उ०२६पृ०)। ऐधिढ्वम्। इड्भिन्न (६६) एव इणिह गृह्यते इति

---

(६४) सलोप इति लिङ सलोपोऽनन्त्यस्येति (उ१६पृ०) सूत्रेणेति शेषः।

(६५) झोन्त (उ८पृ०) इत्यतोझ इति अदभ्यस्तादित्यतो (उ२४पृ०) ऽदिति चानुवर्त्यांह झस्य अत् इति।

(६६) एधिध्वमित्यादौ इणः परत्वेऽपि इटः सिच आदेशतया तद्ग्रहणेनै-

मते तु । ऐधिध्वम् । ढधयोर्वस्य मस्य च द्वित्वविकल्पात् षोडश रूपाणि । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि (१) । उदात्तत्वाद्धलादेरिटप्रसङ्गादनुदात्ताः संगृह्यन्ते ।

ऊदृदन्तै (६७) र्यौतिरुक्ष्णु शीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्याञ्च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥
शक्लृ (६८) पच्मुचिरिच्वच्विच्-
सिच्प्रच्छित्यज्निजिर्भजः ।
भञ्ज्भुज्भ्रस्ज्मस्जियज्युज्रुज्-
रञ्ज्विजिर्स्वञ्ज्ष्वञ्ज्सृजः ॥

---

व इटो ग्रहणात् नाङ्गत्वमिति न ढत्वमित्याशयेनाह इड्भिन्न इति ।

(६७) ऊदृदन्तभिन्ना यौत्यादिभिन्नाश्च एकाचोऽजन्ता निहता अनुदात्ता इत्यर्थः । तत्र यु मिश्रणादौ, रु शब्दे, रुङ् रवे, गत्याश्चेत्युभयोर्ग्रहणम् क्ष्णु तेजने, शीङ् स्वप्ने, ष्णु प्रस्रवने, णु स्तुतौ, टु क्षु शब्दे, श्वि गतिवृद्ध्योः, डीङ् नभोगतौ, श्रिञ् सेवायाम्, वृङ् संभक्तौ, वृञ् वरणे इत्येतदर्थका इष्टैते ग्राह्याः । मनो० ।

(६८) शक्लृ शक्तौ । कान्तः १ । डु, पच पाके, पच व्यक्तीकरणे चोभयोर्ग्रहणम् । मुच्लृ मोक्षे, रिचिर् विरेके, रिच वियेचने, इत्युभावपि वच संभाषे, ब्रुवो वचिरपि, विच् पृथग्भावे, षिच क्षरणे । चान्ताः ६ । प्रच्छ ज्ञीप्सायाम् । छान्तः १ । त्यज हानौ, णिजिर् शुद्धिपोषणयोः, भज् सेवायां, भञ्ज् आमर्दने, भुज् पालनभक्षणयोः, भुजो कौटिल्ये, इति च भ्रस्ज् पाके, टु मस्ज शुद्धौ, यज देवपूजादौ, युजिर् योगे, रुजो भङ्गे, रञ्ज रागे, विजिर् पृथग्भावे, षञ्ज सङ्गे, ष्वञ्ज परि-

अद्‌क्षुद्‌खिद्‌छिद्‌तुदिणुदः पद्यभिद्‌ विद्यतिर्विदः ।
शद्‌सदी स्कन्दतिस्विद्योहदी क्रुध्‌ क्षुधिबुध्यती ॥
बन्धिर्युध्‌राध्यतिरुधी व्यध्‌शुधः साधिसिध्यती ।
मन्यहन्नाप्‌क्षिपक्षुपिस्तप्‌तिपस्तृप्यदृप्यती ॥
लिप्‌लुप्‌वप्‌शप्‌स्वप्‌सृपी यभ्‌रभ्‌लभ्‌गम्‌नम्‌यमो रमिः ।
क्रुशिर्दंशिदिंशी दृश्‌मृश्‌रिश्‌रुश्‌लिश्‌विश्‌स्पृशः कृषिः ।

---

भक्ष्ये, सृज विसर्गे । जान्ता १५ । अद भक्षणे, क्षुदिर्‌ संपेषणे, खिद दैन्ये खिद्यति खिदतिश्च । छिदिर्‌ भेदे, तुद व्यथने, णुद विनोदे, पद गतौ, भिदिर्‌ विदारणे, विद सत्तायां, विद विचारणे, शद्‌ल विशरणगत्यवसादेषु षद गतौ, स्कन्दिर्‌ गतिशोषणयोः, स्विदा गात्रप्रक्षरणे, हद पुरीषोत्सर्गे । दान्ता १५ । क्रुध कोपे, क्षुध बुभुक्षायां, बुध अवगमने, बन्ध बन्धने, युध संप्रहारे, राध संसिद्धौ, रुधिर्‌ आवरणे, रुध कामे, इति दिवादिश्च व्यध ताडने, शुध शौचे, साध संसिद्धौ, षिध संसिद्धौ । धान्ता ११ । मन ज्ञाने, दिवादिः हन्‌ हिंसागत्योः । नान्तौ २ । आप्लृ व्याप्तौ, क्षिप प्रेरणे, दिवादिस्तु-दादिश्च क्षुप स्पर्शे, तप सन्तापे, तप ऐश्वर्य्ये, दिवादिः, तप दाहे इत्यपि णिजभावपक्षे, तिप क्षरणे, तृप प्रीणने, दृप हर्षविमोचनयोः, रुधादौ वेट्कौ इह पाठस्तु अनुदात्तस्य च (७०१०२सू०) इत्येतदर्थः लिप उपलेपे, लुप्लृ छेदने, टु वप बीजतन्तुसन्ताने, शप उपालम्भे, ञि ष्वप स्वापे, सृप्लृ गतौ । पान्ता १२ । यभ मैथुने, रभ राभस्ये, डु लभ प्राप्तौ । भान्ता ३ । गम्लृ गतौ, णम प्रह्वत्वे शब्दे च, यम उपरमे, रमु क्रीडायाम्, मान्ता ४ । क्रुश आक्रोशे, दन्श दंशने, दिश अतिसर्जने, दृशिर्‌ प्रेक्षणे, मृश आमर्शने, रिश रुश हिंसायां, लिश गतौ च, विश प्रवेशे, स्पृश स्पर्शे, शान्ताः १० । कृष विलेखने, भौवादिक तौ-

तुष्त्विष्दुष्द्विषपिष्पुष्विष्शिष्शुष्श्लिष्यतयो घसिः।
वसतिर्दहदिहिदुहो नह्मिह्रुह्लिह्वहिस्तथा॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम्।
तुदादौ (६९) मतभेदेन स्थितौ यौ च चुरादिषु॥
त्वष्टषौ तौ वारयितुं श्यना निर्देश आदृतः। क्लिश्च।
स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यौ श्लिषः श्यना॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये (७०)।
निजिर् विजिर्शक्लृ इति सानुबन्धा अमी तथा (७१)॥
विन्दविन्दसान्द्रदीर्गादेरिष्टो भाष्येऽपि दृश्यते।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम्॥

---

दादिकौ, तुष तुष्टौ, त्विष दीप्तौ, दुष वैकृत्ये, द्विष अप्रीतौ, पिष्लृ संचूर्णने, पुष पुष्टौ, विष्लृ व्याप्तौ, शिष्लृ विशेषणे, शुष शोषणे, श्लिष आलिङ्गने। षान्ताः ११। घस्लृ अदने, प्रकृत्यन्तरम् अत्तेरादेशस्य तु स्थान्युपदेशत्वेनानुदात्तत्वं सिद्धम्। वस निवासे, सान्तौ २। दह भस्मीकरणे, दिह उपचये, दुह दोहने, दुहिरिति च भ्वादिस्तु नेह गृह्यते। णह बन्धे, मिह सेचने, रुह जन्मप्रादुर्भावयोः, लिह आस्वादने, वह प्रापणे। हान्ताः ८। मनो०।

(६९) त्वष्टष्यती इत्यत्र श्यना निर्देशस्य फलमाह तुदादाविति।

(७०) अन्यनिवृत्तये इति अन्ये ये निवर्त्त्यास्ते पुनरेते यथाक्रमं बोध्याः। ष्विदा स्नेहमोचनयोः, पद स्थैर्ये, सेधतिबोधती, चैते भौवादिकाः मन अवबोधने, तानादिकः, पुष पुष्टौ, पोषति पुष्णातिश्च श्लिष दाहे, भौवादिकः वस आच्छादने आदादिकः, एते सेट्काः यौतीतिनिरनुबन्धस्यैव पर्युदासात् युञ् बन्धे इति क्र्यादिस्तु अनिट् मनो०।

(७१) तथेति अन्यनिवृत्तये सानुबन्धा निर्दिष्टा इत्यर्थस्तेन णिजि शुद्धावित्यादादिकः, ओ विजी भयचलनयोरिति तुदादिः, शक्यतिश्च सेट्क एवेत्यर्थः।

रन् जिमसृजी अदिपदी नुद क्षुध् शुषिपुषी शिषिः।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः॥

स्पर्द्ध सङ्घर्षे। सङ्घर्षः पराभिभवेच्छा। धात्वर्थेनोपसंग्रहादकर्मकः। स्पर्द्धते।

**शर्पूर्वाः खयः। ७। ४। ६१।**

अभ्यासस्य शर्पूर्वा (७२) खयः शिष्यन्ते। हलादिः शेषः (उ०१०सू०) इत्यस्यापवादः। पस्पर्द्धे। स्पर्द्धिता। स्पर्द्धिष्यते। स्पर्द्धताम्। अस्पर्द्धत। स्पर्द्धेत। स्पर्द्धिषीष्ट। अस्पर्द्धिष्ट। अस्पर्द्धिष्यत। २। गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। गाधते। जगाधे ३। बाधृ लोडने। लोड़नं प्रतिघातः। बाधते ४। नाथृ नाधृ याच्ञोपतापै (७३) श्वर्य्याशीष्षु। आशिषि नाथ इति वाच्यम् *। अस्याशिष्येवा (७४) त्मनेपदं स्यात् (नाथते ५ अन्यत्र। नाथति। नाधते ६। दध धारणे। दधते।

**अत एकहल्मध्येऽनादेशादेर्लिटि। ६। ४। १२०।**

लिड्निमित्तादेशादिकं (७५) न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यैकारः स्यादभ्यासलोपश्च किति लिटि।

**थलि च सेटि। ३। ४। १२१।**

---

(७२) शर्पूर्वा इति अतद्गुणसंविज्ञानबहुव्रीहिस्तेन शरो न शेषः किन्तु खयामेवेति बोध्यम्। मनो०।

(७३) उपतापो रोग। उपघात इत्यन्ये।

(७४) अनुदात्तत्वादेव सिद्धे नियमार्थमिद वार्त्तिकमित्याह आशिष्येवेति।

(७५) तन्त्रावृत्त्या लिटीत्यादेशस्यापि विशेषणमित्याह लिड्निमित्तेति तेन

प्रागुक्तं स्यात्। आदेशश्चेह वैरूप्यसम्पादक एवाश्रीयते असिद्धयोः प्रतिषेधवचनात् ज्ञापकात्। तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव। देधे। देधाते। देधिरे ७। अतः किम् दिदिवतुः। तपरः किम् ररासे। एकेत्यादि किम् तत्सरतुः। अनादेशादेः किम् चकनतुः। लिट आदेशविशेषणादिह स्यादेव। नेशिथ। सेहे। स्कुदि आप्रवणे। आप्रवणमुत्प्लवनमुद्धरणञ्च।

## इदितो नुम् धातोः। ७। १। ५८।

स्कुन्दते। चुस्कुन्दे ८। श्विदि श्वैत्ये। अकर्म्मकः। श्विन्दते। शिश्विन्दे ९। वदि अभिवादनस्तुत्योः। वन्दते। ववन्दे १०। भदि कल्याणे, सुखे च। भन्दते। बभन्दे ११। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। मन्दते। ममन्दे १२। स्पदि किञ्चिच्चलने। स्पन्दते। पस्पन्दे १३। क्लिदि परिदेवने शोके इत्यर्थः। सकर्म्मकः। क्लिन्दते चैत्रम्। चिक्लिन्दे १४। मुद हर्षे। मोदते १५। दद दाने। ददते।

## न शसददवादिगुणानाम्। ६। ४। १२६।

शसे (७६) ददेर्वकारादीनां गुणशब्देन भावितस्य (७७)

---

नेशिथ सेहे इत्यादि सिद्धम् अन्यथा नशसहादेर्लिटोऽन्यत्र अनेशत् असोढेत्यादौ अन्यथाभूतादिकतया न स्यादिति भावः।

(७६) शसेति तालव्यान्तपाठस्तु आकरविरुद्धत्वादुपेक्ष्य इति। मनो०।

(७७) गुणशब्देन भावितस्येति अवयवावयविभाव. षष्ठ्यर्थः भावितत्वञ्च प्रयोज्यत्वम् तच्च साक्षात्परम्परासाधारणम्। तथा हि शशरतुः

य अकारस्तस्य एत्वाभ्यासलोपौ न। ददद्रे। दददाते। दददिरे १६। ष्वद स्वर्द आस्वादने। अयमनुभवे सकर्मकः रुचावकर्मकः (७८)।

## धात्वादेः (७९) षः सः। ६। १। ६४।

धातोरादेः षस्य सः स्यात्। सात्पदाद्योरिति (पृ० ७१ सू० षत्वस्य निषेधः। अनु-स्वदते। सस्वदे १७। स्वर्दते। सस्वर्दे १८। उर्द माने क्रीड़ायाञ्च।

## उपधायाञ्च। ८। २। ७८।

धातोरुपधाभूतयोरेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। ऊर्दते। ऊर्दाञ्चक्रे १९। कुर्द खुर्द गुर्द गुद क्रीड़ायामेव। कूर्दते। चुकूर्दे २०। खूर्दते २१। गूर्दते २२। गोदते। जुगुदे २३। षूद क्षरणे। सूदते। सुषूदे २४।

सेक (८०) सृप् सृ सृज् स्तृस्त्यान्ये दन्त्याजन्तसादयः।

---

मपरत्तुरित्यादौ अर् रूपे गुणे कृतेऽकार साक्षाद्गुणप्रयोज्य। लुलविथेत्यादौ ओकाररूपे गुणे कृते तस्यावादेशे तदवयवोऽकार इति परम्परया गुणस्य तत्राकारे प्रयोजकत्वमिति विवेकः।

(७८) "स्वदस्व हव्यानी"त्यस्य अनुभवेत्यर्थः 'स्वादु सुगन्धि' स्वदते तपारे'-त्यत्र तु स्वदते रोचते इत्यर्थः। इत्यर्थभेदयोर्यथाक्रममुदाहरणे।

(७९) धात्वादेरिति यदि धातव एव दन्त्यादयः पठ्येरन् तदा सिषेधेत्यादौ आदेशप्रत्यययोरिति (पृ ६५ सू०) नियमात् षत्वं न स्यादिति कारिकानुपठित्वा सादेशः क्रियते इति बोध्यम्। मनो०।

(८०) धातुना लक्षणद्वारा षोपदेशत्वं ज्ञापयति सेकेति दन्त्यच यत्र

एकाचः षोपदेशाः ष्वष्क् (८१) स्विद् स्वद् स्वञ्जस्वपस्मिङः ॥ दन्त्यः केवलदन्त्यः, नतु दन्तोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणज्ञापकात् । ह्राद अव्यक्तशब्दे । ह्रादते । जह्रादे २५ । ह्लादी (८२) सुखे च चादव्यक्तशब्दे ह्लादते २६ । स्वादि आस्वादने । स्वादते २७ । पर्द कुत्सिते शब्दे गुदरवे इत्यर्थः पर्दते २८ । यती प्रयत्ने । यतते । येते २९ । युतृ जुतृ भासने । योतते । युयुते ३० । जोतते । जुजुते ३१ । विथृ वेथृ याचने । विविथे ३२ । विवेथे ३३ । श्रथि शैथिल्ये । श्रन्थते ३४ । ग्रथि कौटिल्ये । ग्रन्थते ३५ । कथि श्लाघायाम् । कन्थते ३६ । एधादयोऽनुदात्तेतो गताः । अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः । अत सातत्यगमने । अतति । अत आदेः (उ२६पृ०) । आत आततुः । आतुः । लुङि आ तइ स ई इति स्थिते ।

इट ईटि । ८ । २ । २८ ।

---

दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स सकार आदिर्येषां ते एकाचः षोपदेशा बोध्या दन्त्यान्तेति किं चुष्कुन्दे इत्यादौ न । एकाचः किं सोसूच्यते सोसूत्रयते इत्यादौ न । अतिप्रसङ्गवारणायाह केवलेति । सेकृ गतौ, सृ गतौ, सृ गतौ, सृज विसर्गे, स्तृञ् आच्छादने, स्त्यै शब्दसंघातयोः, एभ्योऽन्ये इत्यर्थः ।

(८१) उक्तलक्षणेनासंगृहीतानन्यान् धातून् संगृह्णाति ष्वष्केति ष्वष्क गतौ, ञि ष्विदा वरणे, ष्वद आस्वादने, ष्वञ्ज परिष्वङ्गे, ञि ष्वप स्वप्ने, ष्मिङ ईषद्धासे इत्येतेऽपि षोपदेशा इत्यन्वयः ।

(८२) ह्लादीति ईदित्त्वस्य फलं श्वीदितो निष्ठायामिति (उ३५पृ०) इण्निषेधः ।

इट: परस्य सस्य लोप: स्यादीटि परे। सिज्लोप एकादेशे सिद्धो वाच्य: *। अतीत्। अतिष्टाम्। अतिषु:।

वदव्रजहलन्तस्याच:।७।२।३।

वदेर्व्रजेर्हलन्तस्य चाङ्गस्याच: स्थाने वृद्धि: स्यात्, सिचि परस्मैपदेषु। इति प्राप्ते।

नेटि।७।२।४।

इडादौ सिचि प्रागुक्तं न स्यात्। मा भवानतीत्। अतिष्टाम्। अतिषु: १। चिती संज्ञाने। चेतति। चिचेत। अचेतीत्। अचेतिष्टाम्। अचेतिषु: २। च्युतिर् आसेचने।३ सेचनमार्द्रीकरणम् आङीषदर्थेऽभिव्याप्तौ च। इर इत्संज्ञा वाच्या *। च्योतति। चुच्योत।

इरितो वा।३।१।५७।

इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदे परे। अच्युतत्-अच्योतीत् ३। श्च्युतिर् क्षरणे।४ श्च्योतति। चुश्च्योत। अश्च्युतत् अश्च्योतीत्। यकाररहितोऽप्ययम् ५ श्चोतति ४। मन्थ विलोडने। विलोडनं प्रतीघात:। मन्थति। ममन्थ। यासुट: "किदाशिषीति (७१८पृ०) कित्त्वादनिदितामिति (पृ१७८पृ०) नलोप:। मथ्यात् ६। कुथि ७ पुथि ८ लुथि ९ मथि १० हिंसासंक्लेशनयो:। इदित्त्वान्नलोपो न। कुन्थ्यात्। मन्थ्यात्। षिधु गत्याम्। सेधति। सिषेध। सेधिता। असेधीत्। धात्वादेरिति (पृ०७२०पृ०) निषेधे प्राप्ते।

**उपसर्गात् (८३) सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। ८। ३। ६५।**

उपसर्गस्था(८४) दिण्निमित्तादेषां सस्य षः स्यात्।

**सदिरप्रतेः। ८। ३। ६६।**

प्रतिभिन्नादुपसर्गात् सदेः (८५) सस्य षः स्यात्।

**स्तन्भेः। ८। ३। ६७।**

सौत्रस्य(८६ सस्य षः स्यात्। योगविभाग उत्तरार्थः ८७)।

---

(८३) सुनोतीत्यादीनां पञ्चानां श्तिपा निर्देशात् यङ्लुकि अभिसोषवीतीत्यादौ न षत्वम् सेनयेति ण्यन्तात् शपा निर्देशात् यङ्लुकि न, तस्यानेकाच्त्वेऽपि क्वौ णिलोपे आचारे क्वौ यङ' सम्भवात्• सेधेति शपा निर्देशोऽपि तदर्थः दैवादिकनिवृत्त्यर्थश्च।

(८४) इण्को (पृ८५सू०) रित्यधिकारेऽपि उपसर्गे कवर्गासम्भवादिणेव संबध्यते इत्याशयेनाहोपसर्गस्थादिणीति अत्रेदं बोध्यं यत्क्रिया प्रत्येव प्रादीनां विशेषणत्वम् तत्क्रिया प्रत्येवोपसर्गत्वमिति नियमेन निर्गतः सावको यस्मात् इति वाक्ये गतपदलोपे निःसावक इत्यादौ निरादीनां गमाद्युपसर्गतया सुनोत्याद्युपसर्गत्वाभावान्न षत्वम्।

(८५) सदिरिति प्रथमा षष्ठ्यर्थे इत्याशयेन व्याचष्टे सदेरिति।

(८६) सौत्रस्येति स्तन्भुस्तुन्भित्यादिसूत्रे (उ१६४सू०) निर्दिष्टस्यैव स्तन्भेः ग्रहणं नकारविशिष्टतया तस्यैव प्रत्यभिज्ञानात्।

(८७) उत्तरेति पृथक्सूत्रकरणात् अवाच्चेति (उ३८सू०) सूत्रे स्तन्भेरेव सम्बन्धो न सदेः इत्यर्थः।

किञ्च अप्रतेरिति नानुवर्त्तते (८८) बाहुप्रतिष्टम्भविवृद्ध-मन्युरिति।

**अवाच्चालम्बना (८९) विदूर्य्ययोः। ८। ३। ६८।**

अवात् स्तन्भेरेतयोरर्थयोः षत्वं स्यात्।

**वेश्च स्वनो भोजने। ८। ३। ६९।**

व्यवाभ्यां स्वनतेः षः स्याद् भोजने (९०)।

**परिनिविभ्यः (९१) सेवसितसयसिवुसहसुट्-स्तुस्वञ्जाम्। ८। ३। ७०।**

परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति।

**प्राक् सितादड् व्यवायेऽपि। ८। ३। ६३।**

---

(८८) नानुवर्त्तते इति स्तन्भेरित्यस्यत्वे इति शेषः अननुवृत्तेः फलमाह बाहुप्रतीति रघुवंशपद्यमेतत्।

(८९) आलम्बनमाश्रयणं यथा यष्टिमवष्टभ्यास्ते, आविदूर्य्यं सामीप्यम् अवष्टभ्या गौः निरुद्धा सती समीपे आस्ते इत्यर्थः। न नञ्पूर्वादिति (पू० ६५२पृ०)निषेधे सत्यपि निपातनात् अविदूराद्भावप्रत्यय इति। मनो०।

(९०) वि-ष्वणति मांसं सशब्दं भुङ्क्ते इत्यर्थः अन्यत्र वि-स्वनति वीणेति।

(९१) षेवृ सेवने, षिञ् बन्धने, क्तान्त सय इत्यजन्त प्रत्ययविशिष्टग्रहणात् विषित विषय इत्यत्रैव षत्वं वि-सिनोतीत्यादौ तु न। षिवु तन्तु-सन्ताने, षह शक्तौ, सुट् आगमः परिष्करोतीत्यादौ षत्वम्। स्तुस्वञ्जो-रुपसर्गात् (७३७पृ०) इत्यनेनैव सिद्धे पर्य्यादिपूर्वयोरेतयोः "अड् अव्यवाये सिवादीनां वेति (७८९पृ०) विकल्पार्थं पुनर्वचनम्।

सेवसितेत्यत्र सितशब्दात्(९२)प्राक् ये सुनोत्यादय(उ१९पृ०)स्तेषा-मड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्।

**स्थादिष्वभ्यासेन चाभ्यासस्य। ८। ३। ६४।**

प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषा-मेव (९३) चाभ्यासस्य न तु सुनोत्यादीनाम्। नि-षिषेध। नि षिषिधतुः।

**सेधतेर्गतौ। ८। ३। ११३।**

गत्यर्थस्य सेधतेः षत्वं न स्यात्। गङ्गां वि-सेधति ११। षिधू शास्त्रे माङ्गल्ये च। शास्त्रं शासनम्।

**स्वरतिसूतिसूयतिधूञूदितो वा। ७। २। ४४।**

---

(९२) क्तान्तात् षिञ् बन्धने इत्यत प्राक् अष्टमाध्यायतृतीयपादस्यपञ्च-षष्टसूत्रमारभ्य तत्रत्यसप्ततितमसूत्रपर्यन्तसूत्रषट्कनिर्दिष्टा इत्यर्थः।

(९३) अत्रेदं बोध्यम् स्थादिषु द्वे वाक्ये तत्र यद्यपि नि-षिषेधेत्यादौ पूर्व-भागस्योपसर्गादित्यनेन (उ१७पृ०) सिद्धिः द्वितीयस्य तु आदेशप्रत्य-ययोरिति(प०९५पृ०)सिद्धिस्तथापि आद्यं वाक्यं फलत्रयार्थम् अभि-षि-षेणयिषतीत्यादौ अषोपदेशस्यापि षत्वार्थम् अधि-तष्ठावित्यादौ अव-र्णान्तादपि द्वितीयस्य षत्वार्थं, षणि निषिद्धप्रतिप्रसवार्थञ्च तेन स्तौति-ण्योरिति (उ२०४पृ०) नियमेन निवर्त्तितमपि षत्वम् अभिषिषिक्षती-त्यादावनेन स्यादेव। अभ्यासस्येति द्वितीयं वाक्यं स्थादिष्वभ्यासस्य षत्वं न तु सुनोतीत्यादिष्विति नियमार्थं तत्फलन्तु अभिसुसूषतीत्यादौ अभ्यासस्य न षत्वम् द्वितीयस्य तु स्तौतिण्योरेवेति नियमात् नेति विशेषः। अभिषिषासतीत्यादौ तु षणोऽसम्भवेन आदेशप्रत्यययोरिति षत्वम् पूर्वस्य तु न उक्तनियमादिति एवमन्यत्राप्युह्यम्। म०टी०।

स्वरत्यादेरूदितश्च परस्य वलादेरार्द्धधातुकस्य इट् वा स्यात्।

**झषस्तथोर्धोऽधः। ८। २। ४०।**

झषः परयोस्तथोर्धः स्यात् न तु दधातेः। जश्त्वम्। सिषेद्ध-सिषेधिथ। सेद्धा-सेधिता। सेत्स्यति-सेधिष्यति। असैत्सीत्।

**झलो झलि। ८। २। २६।**

झलः परस्य सस्य (८४) लोपः स्यात् झलि। असैद्धाम्। असैत्सुः। असैत्सीः। असैद्धम्। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। पक्षे असेधीत्। असेधिष्टामित्यादि १२। खादृ भक्षणे। ऋकार इत्। खादति। चखाद १३। खद स्थैर्य्ये हिंसायाञ्च चाद्भक्षणे। स्थैर्य्ये अकर्म्मकः। खदति।

**अत उपधायाः। ७। २। ११६।**

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। चखाद।

**णलुत्तमो वा। ७। १। ९१।**

उत्तमो णल् वा णित् स्यात्। चखाद-चखद।

**अतो हलादेर्लघोः। ७। २। ७।**

---

(८४) सस्य लोपइति तत्र प्रत्यासत्तेः झलोझलि सस्येति निर्दिष्टाना त्वया-श्वामिकपदस्थत्वे एव लोपस्तेन सोमसुत् स्थाोत्यादा नेति बोध्यम्।

हलादेर्लघोरकारस्य इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात्। अखादीत्-अखदीत् १४। बद स्थैर्ये। पवर्गीयादिः। बदति। बबाद। बेदिथ १५। गद व्यक्तायां वाचि। गदति।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। ८। ४। १७।**

उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु। प्रणिगदति। जगाद १६। रद विलेखने। विलेखनम्भेदनम्। रराद। रेदतुः १७। णद अव्यक्तशब्दे।

**णो नः। ६। १। ६५।**

धातोरादेर्णस्य नः स्यात्।

णोपदेशा (८५) स्त्वनर्दनाटिनाथ्नाध्नन्दनक्कनॄनृतः।

नाटेर्दीर्घोहितस्य पर्युदासान्नटादिर्णोपदेश एव। तवर्गचतुर्थान्तनाधतेर्नर्दतेश्च केचिण्णोपदेशतामाहुः।

**उपसर्गादसमासेऽपि णोपदेशस्य। ८। ४। १४।**

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्

(८५) नर्द शब्दे नट अवस्यन्दने चुरादिः नाटीति दीर्घनिर्देशात् णट नृत्ताविति घटादिर्नेह गृह्यते नाधृ नाथृ याच्ञादौ टु नदि समृद्धौ नक्क नाशने नृ नये नृती गात्रविक्षेपे एतद्भिन्ना णोपदेशा इत्यर्थस्तेषामेव णत्वनिमित्ते सति णत्व नत्वाभिव्याप्तिफलम्।

समासेऽसमासेऽपि। प्र-णदति। प्र-णि-नदति १८। अर्द गतौ याचने च। अतआदेः (७।१।७०)।

## तस्मान्नुड् द्विहलः। ७।४।७१।

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात्। आनर्द। आर्दीत् १९। नर्द गर्द शब्दे। णोपदेशत्वाभावान्न णः। प्र नर्दति २०। गर्दति। जगर्द २१। तर्द हिंसायाम्। तर्दति २२। कर्द कुत्सिते शब्दे। कुत्सितं कोष्ठे। कर्दति २३। खर्द दन्दशूके। दशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः। खर्दति। चखर्द २४। अति अदि बन्धने। अन्तति। आनन्त २५। अन्दति। आनन्द २६। इदि परमैश्वर्य्ये। इन्दति। इन्दाञ्चकार २७। बिदि अवयवे। पवर्गतृतीयादिः। बिन्दति। अवयवङ्करोतीत्यर्थः। भिदीति पाठान्तरम् २८। गडि वदनैकदेशे। गण्डति २९। अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः। अन्ये तु तिङमपीच्छन्ति। णिदि कुत्सायाम्। निन्दति। प्र-णिन्दति ३०। टु नदि समृद्धौ।

## आदिर्ञिटुडवः। १। ३। ५।

उपदेशे धातोराद्या एते इतः स्युः। नन्दति। इदित्त्वान्नलोपो न। नन्द्यात् ३१। चदि आह्लादे। चचन्द ३२। त्वदि चेष्टायाम्। तत्वन्द ३३। कदि क्रदि क्लदि आह्वाने रोदने च। चकन्द ३४। चक्रन्द ३५। चक्लन्द ३६। क्लिदि परिदेवने। चिक्लिन्द ३७। शुन्ध शुद्धौ। शुशुन्ध। नलोपः।

शुध्यात् ३८। अथ (८६) कवर्गीयान्ता अनुदात्तेतो द्वि-चत्वारिंशत्। शीकृ सेचने। तालव्यादिः दन्त्यादिरित्येके। शीकते। शिशीके १। लोकृ दर्शने। लोकते। लुलोके २। श्लोकृ सङ्घाते। सङ्घातो ग्रन्थः स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा आद्ये अकर्मको द्वितीये सकर्मकः। श्लोकते ३। द्रेकृ ध्रेकृ शब्दोत्साहयोः। उत्साहो वृद्धिरौद्धत्यञ्च। दिद्रेके ४। दिध्रेके ५। रेकृ शङ्कायाम्। रेकते ६। सेकृ ७ स्रेकृ ८ स्रकि ९ श्रकि १० श्लकि ११ गतौ। त्रयो दन्त्यादयः। द्वौ तालव्यादी। अषोपदेशत्वान्न षः। सिसेके। शकि शङ्कायाम्। शङ्कते। शशङ्के १२। अकि लक्षणे। अङ्कते। आनङ्के १३। वकि कौटिल्ये। वङ्कते १४। मकि मण्डने। मङ्कते १५। कक लौल्ये। लौल्यङ्गर्वश्चापल्यञ्च। ककते। चकके १६। कुक वृक आदाने। कोकते। चुकुके १७। वर्कते। ववृके १८। ऋदुपधेभ्यो लिटः कित्त्वं (८७) गुणात्पूर्वविप्रतिषेधेन। चक तृप्तौ प्रतिघाते च। चकते। चेके १९। ककि २० वकि २१ श्वकि २२ त्रकि २३ ढौकृ २४ त्रौकृ २५ ष्वष्क २६ वस्क २७ मस्क २८ टिकृ २९ टीकृ ३० तिकृ ३१ तीकृ ३२ रघि ३३ लघि ३४ गत्यर्थाः। कङ्कते। डुढौके।

---

(८६) प्रथमं माङ्गलिकतया तवर्गान्त एधतिरभिहितस्तदनुरोधेनैव कतिचित् तवर्गीयान्तानुक्त्वा मातृकापाठक्रमेण कवर्गीयप्रभृत्यन्तान् क्रमेणाह अथेति।

(८७) परमपि गुणं बाधित्वा नित्यत्वात् लिटः कित्त्वमित्याशयेनाह लिटः कित्त्वमिति (एतच्च प्रसङ्गादुक्तमपित्त्विट. कित्त्वस्य सिद्धेः।

तुत्रौके। सुब्धातुष्ठिवष्वक्कतीनां (८८) सत्वप्रतिषेधो वक्तव्यः * । ष्वक्कते। षष्वक्के। अत्र तृतीयन्दन्त्यादिमेकै।• लघि भोजन निवृत्तावपि। अघि वघि मघि गत्याक्षेपे। आक्षेपो निन्दा। गतौ गत्यारम्भे चेत्यन्ये। अङ्घते। अनङ्घे ३५। वङ्घते ३६। मङ्घते ३७। मघि कैतवे च। राघृ लाघृ द्राघृ सामर्थ्ये। राघते ३८। लाघते ३९। ध्राघृ ४० इत्यपि केचित्। द्राघृ आयामे च। आयामो दैर्घ्यम्। द्राघते ४१। श्लाघृ कत्थने। श्लाघते ४२। अथ परस्मैपदिनः पञ्चाशत् ५०। फक्क नीचैर्गतौ। नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क १। तक हसने। तकति २। तकि कृच्छ्रजीवने। तङ्कति ३। तुक भषणे भषणं श्वरवः। बुक्कति ४। कख हसने। प्रनिकखति ५। ओखृ ६ राखृ ७ लाखृ ८ द्राखृ ९ ध्राखृ १० शोषणालमर्थयोः। ओखति। ओखाञ्चकार। शाखृ ११ श्लाखृ १२ व्याप्तौ। शाखति। उख १३ उखि १४ वख १५ वखि १६ मख १७ मखि १८ णख १९ णखि २० रख २१ रखि २२ लख २३ लखि २४ इख २५ इखि २६ ईखि २७ वल्गि २८ रगि २९ लगि ३० अगि ३१ वगि ३२ मगि ३३ तगि ३४ त्वगि ३५ श्रगि ३६ श्लगि ३७ इगि ३८ रिगि ३९ लिगि ४० गत्यर्थाः। कवर्गद्वितीयान्ताः पञ्चदश। तृतीयान्ता-

---

(८८) सुब्धात्विति तेन पराङमाचष्टे इत्याख्याने णिचि पराङयतीत्यादौ न सत्वम् वस्तुत उपदेशे इत्युक्तेः तस्योपदेशाभावात् सुब्धात्वित्यशो भाष्यकृता प्रत्याख्यातः।

चित्रेत्ययमङ्ग, तद्दर्शने चित्रं लभते चित्रयति ११। अंस १२ समाघाते। वट १३ विभाजने। लज १४ प्रकाशने। वटि लजि इत्येके। वण्टयति १५। लञ्जयति १६। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये। वण्टापयति। लञ्जापयति। शाकटायनस्तु कथादीनां सर्वेषां पुकमाह। तन्मते कथापयति। गणापयतीत्यादि। मिश्र १७ सम्पर्के। संग्राम युद्धे। अयमनुदात्तेत्। अकारप्रश्लेषात् (६)। असंग्रामत १८। स्तोम श्लाघायाम्। अतुस्तोमत् १९। छिद्र २० कर्णभेदने। करणभेदन इत्यन्ये। कर्ण २१ इति धात्वन्तरमित्यन्ये। अन्ध दृष्ट्युपघाते। उपसंहार इत्यन्ये। आन्दधत् २२। दण्ड २३ दण्डनिपातने। अङ्क पदे लक्षणे च। आञ्चकत् २४। अङ्ग च। आञ्जगत् २५। सुख २६ दुःख २७ तत्क्रियायाम्। रस २८ आस्वादनस्नेहनयोः। व्यय वित्तसमुत्सर्गे। अवव्ययत् २९। रूप ३० रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। छेद द्वैधीकरणे। अचिच्छेदत् ३१। छद अपवारण इत्येके। छदयति ३२। लाभ ३३ प्रेरणे। व्रण ३४ गात्रविचूर्णने। वर्ण वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति कथां वर्णयति विस्तृणातीत्यर्थः। हरिं वर्णयति ३५ स्तौतीत्यर्थः। बहुलमेतन्निदर्शनम् ग०। अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि

---

(६) अग्लोपित्वाभावेनोपधाह्रस्वत्वापत्तेः असंग्रामतेति न सिध्येदित्याशङ्क्याह अकारप्रश्लेषादिति। संग्राम अ इति स्थिते संग्रामोत्तराकारस्यानुदात्ततया इत्त्वेऽपि धात्ववयवाकारस्थितेस्तथा निर्देशः तेनादन्तत्वमस्य, तथा चाग्लोपित्वान्नोपधाह्रस्व इति भावः। समिति नोपसर्गः किन्तु धात्ववयव इति न भ्रमः पूर्ववत्।

बोध्याः। तद्यथा। पर्ण हरितभावे। अपपर्णत् ३६ विष्क ३७ दर्शने। चप ३८ प्रेरणे। वस ३९ निवासे। तुत्थ ४० आवरणे। एवमान्दोलयति ४१। प्रेङ्खोलयति ४२। विडम्बयति ४३।' अवधीरयतीत्यादि ४४। अन्ये तु दशगणीपाठो बहुलमित्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे तु नवगणीपाठो बहुलमित्याहुः। तेनापठितेभ्योऽपि क्वचित् स्वार्थे णिच्। "रामो राज्यमचीकरदिति" यथेत्याहुः। चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये। सर्व्वे पक्षाः प्राचां ग्रन्थे स्थिताः। णिङङ्गान्निरसने ग०। अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात्। हस्तौ निरस्यति हस्तयते। पादयते। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ग०। श्वेताश्वादीनाञ्चतुर्णामश्वादयो लुप्यन्ते णिङ् धात्वर्थे। श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते। अश्वतरमाचष्टे अश्वयते। गालोडितं वाचां विमर्शः। तत्करोति गालोडयते। आह्वरयते। केचित्तु णिचमेवानुवर्त्तयन्ति तन्मते परस्मैपदमपि। पुच्छादिषु धात्वर्थ एव इत्येव सिद्धम् ग०। णिजन्तादेव बहुलवचनादात्मनेपदमस्तु मास्तु पुच्छभाण्डेति णिङ्विधिः। सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः

इति चुरादयः।

**तत्प्रयोजको हेतुश्च । १ । ४ । ५५ ।**

कर्त्तुः प्रयोजको हेतुसंज्ञः कर्त्तृसंज्ञश्च स्यात् ।

**हेतुमति च । ३ । १ । २६ ।**

प्रयोजकव्यापारे (१) प्रेषणादौ (२) वाच्ये धातोर्णिच् स्यात् । भवन्तम्प्रेरयति । भावयति णिचश्चेति (३।७०पृ०) कर्त्तृगे फले आत्मनेपदम् । भावयते ।० भावयाम्बभूव ।

**ओः पुयण्ज्यपरे । ७ । ४ । ८० ।**

सनि परे यदङ्गन्तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूङ् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् ।

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीतां वा । ७ । ४ । ८१ ।**

एषामभ्यासोकारस्य इत्त्वं वा स्यात्तन्यवर्णपरे धात्वक्षरे परे ।

---

(१) स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन हेतुर्यस्यास्ति स हेतुमान् व्यापारस्तस्मिन् वाच्ये णिजित्याह प्रयोजकव्यापार इति । प्रयोजकश्च चेतनाचेतनसाधारण्येन ग्राह्यः तत्र देवदत्तः पाचयतीत्यादौ चेतनः, भिक्षा वासयतीत्यादौ अचेतनेति भेदः ।

(२) भृत्यादेर्निकृष्टस्य प्रवर्त्तनं प्रेषणमाज्ञेत्यर्थः आदिशब्देनाध्येषणानुमत्यादीनां ग्रहणं समानस्याधिकस्य वा सत्कारपूर्वकं प्रवर्त्तनाऽध्येषणा प्रार्थनेत्यर्थः अनुमत्यादिस्तु राजादे, स्तदनुमतिं विना कार्य्यानिष्पत्तेः । लोडादितो णिचो विशेषस्तु हरिणा दर्शितः ।

असिस्वरत्—अससस्वरत्। नाग्लोपीति (उ।७८पृ०) सन्वन्निषेधः अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे (३)। अचचकासत्। अग्लोपीति सुब्धातुप्रकरणे (उ२२२पृ०) उदाहरिष्यते। ण्यन्ताच्चिच्। पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिज्लोपः। (उ६०पृ०सू०) चोरयति। णौ चङीति (उ६१पृ०) ह्रस्वः दीर्घो लघोः (उ६१पृ०)। नचाग्लोपित्वाद्दयो-(४) रप्यसम्भवः ण्याकृतिनिर्द्देशात् (५)। अचूचुरत्।

**णौ च संश्चङोः। २। ४। ५१।**

सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात्। सम्प्रसारणन्तदाश्रयञ्च कार्य्यं बलवदिति वचनात्सम्प्रसारणम्। पूर्वरूपम् (पू१४८पृ०सू०)। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्।

---

द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोट् विधीयते।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति॥

प्रपञ्चितश्चैतत् शब्दार्थरत्नेऽस्माभिस्तत्रैव द्रष्टव्यम्।

(३) मतान्तरे इति चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्यैवेत्व-मिति मते इत्यर्थस्तेन अचचकासदिति णिनिमित्तस्य चङ्परनिमित्तक-लघुत्वाभावात्।

(४) द्वयोरिति उक्तह्रस्वाभ्यासुपधाह्रस्वाभ्यासदीर्घयोरित्यर्थस्तथाचाचुचोर-दिति स्यात्।

(५) ण्याकृतीति चङ्परे णावित्यत्र णिशब्द आकृतिपरो जातिपर इत्यर्थस्तथाच हेतुमण्णिचि परे स्वार्थिकणिचो लुप्तत्वेऽपि तस्य स्थानि-वत्त्वात् णित्वसत्त्वेऽतथा चोरयतीत्यादौ गुणवृद्ध्यादि अन्यथागण-यतीत्यादौ अल्लोपस्य स्थानिवद्भावेनोपधावृद्ध्यादेरभाव इव प्रस-

## स्तम्भुसिवुसहाञ्चङि। ८। ३। ११६।

उपसर्गनिमित्त एषां सस्य षो न स्याच्चङि। अवातस्तम्भत्। पर्य्यसीषिवत्। न्यसीषहत्। आटिटत्। आशिशत्। वहि-रङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव (६) ओणेऋदित्करणाल्लिङ्गात्। मा भवानिदिधत्। एजादावेधतौ (पू०४२सू०स्म०) विधानान्न वृद्धिः। मा भवान् प्रेदिधत्। न न्द्रा इति (उ३१५सू०) नदराणां न द्वित्वम्। औन्दिदत्। आड्डिडत्। आर्चिचत्। उद्ज आर्ज्जवे उपदेशे दकारोपधः। भुजन्युब्जौ पाण्युपतापयोरिति (उ३१५सू०) सूत्रे निपातनाद्दस्य बः (७) स चान्तरङ्गोऽपि द्वित्वविषये न न्द्रा इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्त्तते न तु ततः प्राक् दकारोच्चारणसामर्थ्यात्। औब्जिजत्। अजादे (८) रित्येव नेह। अदिद्रयत्।

## रभेरशब्लिटोः। ७। १। ६३।

रभेर्नुम् स्यादचि नतु शब्लिटोः। अररम्भत्।

---

तेऽपि स्यात् तच्चानिष्टम् तथाच स्थानिवद्भावेन स्वार्थिकणिचोऽपि चङ्परत्वसम्भवात् तदाश्रयेणैव ह्रस्वदीर्घयोः सम्भव इति भावः।

(६) यदि पूर्वं द्वित्वं भवेत्तदा अजादेर्द्वितीयस्येति (७८सू०) सूत्रात् णिशब्दस्यैव द्वित्वे कृते उपधाह्रस्वस्याप्राप्तेस्तत्प्रतिषेधार्थमोणृधातोः ऋदित्करणं व्यर्थं स्यादतस्तदेव उक्तार्थे ज्ञापकमित्येतदाह ओणृधातो-रिति।

(७) न्युब्जेत्यत्र जकारयोगे एव वकारोच्चारणात् तद्बह्योग एव बकारो न तु बहत इत्यादौ कवर्गयोगेऽपीति बोध्यम्।

(८) न न्द्रा इत्यत्राजादेर्द्वितीयस्येत्यनुवर्त्तते तथाचादिभूतादचः परा एव नदरा न द्विर्वचना इत्यर्थः।

## लभेश्च। ७।१।६४।

अलल्भत्। ह्रेरचङीति (७।४७सू०) सूत्रेऽचङीत्युक्तेः कुत्वम्। अजोह्वयत्। अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् (७।७।सू०) अस-स्मरत्। अदद्रत्। तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः।

## विभाषा वेष्टिचेष्ट्योः। ७।४।९६।

अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ। अववेष्टत्—अविवेष्टत्। अचचेष्टत्—अचिचेष्टत्। भ्राजभासेत्यादिना (७।७।सू०) वोप-धाह्रस्वः। अबिभ्रजत्—अबभ्राजत्। काण्यादीनां वेति वक्त-व्यम् *। णयन्ताः कणरणभणश्रणलुपहेठः। काण्यादयः षड् भाष्ये उक्ताः। ह्वायिवाणिलोटिलोपयस्त्वारोऽधिका न्यासे। चाणिलोठी इत्यप्यन्यत्र इत्थं द्वादश। अचीकणत्—अचकाणत्।

## स्वापेश्चङि। ६।१।१८।

ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात्। असूषुपत्।

## शाच्छासाह्वाव्या (८) वेपां युक्। ७।३।३७।

णौ। पुकोऽपवादः। शाययति। ह्वाययति।

## ह्वः सम्प्रसारणम्। ६।१।३२।

सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात्। अजूहवत्—अजुहावत् ‡।

---

(८) शाच्छासादीनां कृताकारत्वानां निर्देशः पुकः प्राप्तिसूचनाय पुको लाक्ष-णिकाकारत्वेऽपि प्रवृत्तेस्तेन अध्यापयति क्रापयतीत्यादिसिद्धिः।

‡ ह्वायिवाणीत्यादि न्यासोक्तावौपधा ह्रस्वः।

## लोपः पिबतेरीच्चाभ्यासस्य । ७ । ४ । ४ ।

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् अर्त्तिह्रीति (उ०७५पृ०) पुक् । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । क्ष्मापयति ।

## तिष्ठतेरित् । ७ । ४ । ५ ।

उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् ।

## जिघ्रतेर्वा । ७ । ४ । ६ ।

अजिघ्रिपत्—अजिघ्रपत् । उर्ऋत् (उ०७२पृ०) । अचीकृतत्—अचिकीर्त्तत् । अवीवृतत्—अववर्त्तत् । अमीमृजत्—अममार्जत् । पातेर्णौ लुग्वक्तव्यः* । पुकोऽपवादः । पालयति ।

## वो (१०) विधूनने जुक् । ७ । ३ । ३८ ।

वातेर्जुक् स्याणौ कम्पेऽर्थे । वाजयति । कम्पे किम् केशान्वापयति । विभाषा लीयतेः (उ०२५पृ०) ।

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने । ७ । ३ । ३९ ।

लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेहद्रवे ।

---

(१०) व इति वै शोषणे इत्यस्यैव ग्रहणं न तु वा गतिगन्धनयोरित्यस्य तस्य लुग्विकरणत्वात् । लुग्विकरणालुग्विकरणयोर्मध्येऽलुग्विकरणस्यैव ग्रहणमिति न्यायात् ।

विलीनयति-विलापयति। विलालयति—विलाययति वा घृतम्। ली ई इति ईकारप्रश्लेषादात्त्वपक्षे नुक् न। स्नेहद्रवे किम्-लोहं विलापयति। प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्व-मस्तीति वाच्यम्*।

लियः सम्माननशालीनीकरणयोश्च। १। ३। ७०।

लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभि-भवयोः प्रलम्भने चार्थे। जटाभिर्लापयते पूजामधिगच्छ-तीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते अभिभवतीत्यर्थः। बाल-मुल्लापयते वञ्चयतीत्यर्थः।

बिभेतेर्हेतुभये। ६। १। ५६।

बिभेतेरेच आत्त्वं वा स्यात्प्रयोजकाद्भयश्चेत्।

भीस्म्योर्हेतुभये। १। ३। ६८।

आभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ। सत्रे भयग्रहणं धात्व-र्थोपलक्षणम्। मुण्डो भापयते।

भियो हेतुभये षुक्। ७। ३। ४०।

भी ई इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये। भीषयते।

नित्यं स्मयतेः। ६। १। ५७।

स्मयतेरेचो नित्यमात्त्वं स्याण्णौ हेतोः भये। जटिलो विस्मा

पयते। हेतोश्चेद्भयस्मयावित्युक्तेर्नेह। कुञ्चिकयैनम्भाययति, विस्माययति। कथन्तर्हि "विस्मापयन् विस्मितमात्मवृत्ताविति" "मनुष्यवाचेति" करणादेव हि तत्र स्मयः अन्यथा शानजपि स्यात्। सत्यम् विस्माययन्नित्येव पाठ इति साम्प्रदायिकाः। यद्वा मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति ण्यन्तात्शौ शतेति व्याख्येयम्।

स्फायो वः। ७। ३। ४१।

णौ। स्फावयति।

शदेरगतौ तः। ७। ३। ४२।

शदेर्णौ तोऽन्तादेशः स्यान्नतु गतौ। शातयति। गतौ तु। गाः शादयति गोविन्दः गमयतीत्यर्थः।

रुहः पोऽन्यतरस्याम्। ७। ३। ४३।

णौ। रोपयति—रोहयति।

क्रीङ्जीनां णौ। ६। १। ४८।

एषामेच आत्वं स्याण्णौ। क्रापयति। अध्यापयति। जापयति।

णौ च संश्चङोः। ६। १। ३१।

सन्परे चङ्परे च णाविङो गाङ् वा स्यात्। अध्यजीगपत्—अध्यापिपत्।

सिध्यतेरपारलौकिके। ६। १। ४९।

ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्त्वं स्यात्णौ। अन्नं साधयति निष्पादयतीत्यर्थः। अपारलौकिके किम् तापसः सिध्यति तत्त्वन्निश्चिनोति तं प्रेरयति सेधयति तापस-स्तपः॥

## प्रजने वीयतेः। ६।१।५५।

अस्यैच आत्त्वं वा स्यात्णौ प्रजनेऽर्थे। वापयति वाययति वा गाः पुरोवातः गर्भं ग्राहयतीत्यर्थः।

ऊदुपधाया गोहः (उ८२४सू०)। गूहयति।

## दोषो णौ। ६।४।९०।

दुष इति सुवचम्। दुष्यतेरुपधाया ऊत्स्यात्णौ। दूषयति।

## वा चित्तविरागे। ६।४।९१।

विरागोऽप्रीतता। चित्तं दूषयति दोषयति वा कामः। मितां ह्रस्वः (उ१७४सू०) भ्वादौ (उ८५सू०) चुरादौच(उ१७४सू०) मितउक्ताः। घटयति। जनीजॄष् (उ८५सू०ग०)। जनयति। जरयति। जॄणा-तेस्तु। जारयति। रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः *। मृग-रमणमाखेटकम्। रजयति मृगान्। मृगेति किम् रञ्जयति पक्षिणः। रमणादन्यत्र तु। रञ्जयति मृगान् तृणदानेन। चुरादिषु ज्ञपादिश्चिञ् (उ१७४सू०)। चिस्फुरोर्णौ (उ१७४सू०)। चपयति—चययतीत्युक्तम्। चिनोतेस्तु। चापयति—चाययति। स्फारयति—स्फोरयति। अपुस्फुरत्—अपस्फुरत्।

## उभौ साभ्यासस्य। ८।४।२१।

साभ्यासस्यानितिरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत्।

**णौ गमिरबोधने। २।४।४६।**

इणो गमिः स्याणौ। गमयति। बोधने तु। प्रत्याययति। इणवदिकः (७।११६पृ०)। अधिगमयति। हनस्तोऽचिण्णलोः (७।८६पृ०)। हो हन्तेरिति (७।५८पृ०) कुत्वम्। घातयति। ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् *। तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्ये षकारस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजादेर्द्वितीयस्येत्यस्य (७९पृ०) अपवादतया सन्नन्ते प्रवर्त्तते। ऐर्ष्यियत्। ऐर्षिष्यत्। द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते हलादिशेषात् द्वित्वन्तु द्वितीयस्यैव तृतीयाभावेन प्रकृतवार्त्तिकाप्रवृत्तेः। निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ (११) णुजेन तुल्योऽर्थः। तेन "प्रार्थयन्ति शयनोत्थितप्रियाः" इत्यादि सिद्धम्। एवं सकर्म्मकेषु सर्वेषूह्यम्।

इति णिच्प्रक्रिया।

---

(११) अर्थधातोरात्मनेपदित्वेन प्रार्थयन्तीत्यस्यासाधुत्वशङ्कायां तत्समर्थनायाह निवृत्तेति "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इत्युक्तेः प्रार्थनं कुर्वन्तीत्येकत्वमेव हेतुमण्णिच इत्यतो न अकर्त्तृगे फले परस्मैपदित्वव्याघात इति भावः।

धातोः कर्मणः समानकर्तृकादिच्छायां वा । ३ । १ । ७ ।

इषिकर्म्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । धातोर्विहितत्वादिह सन् आर्द्धधातुकत्वम् । इट् द्वित्वम् । सन्यतः (उ६१पृ०) । पठितुमिच्छति पिपठिषति । कर्म्मणः किम् गमनेनेच्छतीति करणान्मा भूत् । समानकर्तृकात्किम् शिष्याः पठन्त्वितीच्छति गुरुः । वाग्रहणात्पक्षे वाक्यमपि । लुङ्सनोर्घसॢ (उ११०पृ०) । एकाच उपदेश इति (उ२५पृ०) नेट् । सस्य तत्वम् । अत्तुमिच्छति जिघत्सति । ईर्ष्यतेस्तृतीयस्येति (उ१६८पृ०) यिसनोर्द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति ।

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २ । ८ ।

एभ्यः संश्चात् क्त्वा च कितौ स्तः । रुरुदिषति । विविदिषति । मुमुषिषति ।

सनि ग्रहगुहोश्च (१) । ७ । २ । १२ ।

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् । ग्रहिज्येति (उ१०६पृ०) सम्प्रसारणम् । सनः षत्वस्यासिद्धत्वाद्भष्भावः । जिघृक्षति । जुघुक्षति ।

किरश्च पञ्चभ्यः । ७ । २ । ७५ ।

(१) सनीति सूत्रे चकारात् श्रुत्रकः कितीति (उ६७पृ०) सूत्रात् उक इत्यनुकृष्यते तेन बुभूषतीत्यादिसिद्धिः अयतिस्तु नानुकृष्यते सनीयन्तर्द्धेति (उ२००पृ०) विशेषविधानात् ।

कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट् स्यात्। चिकरिषति। जिगरिषति—जिगलिषति। अचेटो वृतो वा (उ१००पृ०) दीर्घो नेष्टः। दिदरिषते। दिधरिषते। कथमुद्दिधीर्षुरिति। भौवादिकयोर्धृङ्धृञोरिति (पृ६४पृ०) गृहाण। पिपृच्छिषति।

**इको झल्। १। २। ९।**

इगन्ताज्झलादिः सन् कित्स्यात्। बुभूषति। दीङ्। दातुमिच्छति दिदीषते। एज्विषयत्वाभावान्न (२) मीनातिमीनोतीति (उ१३४पृ०) आत्वम्। अत एव सनि मीमेति सूत्रे (उ२०२पृ०) माधातोः पृथङ्मीग्रहणं कृतम्।

**हलन्ताच्च। १। २। १०।**

इक्समीपा (३) द्धलः परो झलादिः सन् कित्स्यात्। गुह्। जुघुक्षति। बिभित्सति। इकः किम् यियक्षते। भल्किम् विवर्द्धिषते। हल्ग्रहणं जातिपरम्। तृन्हू। तितृक्षति—तितृंहिषति।

**अज्झनगमां सनि। ६। ४। १६।**

अजन्तानां हन्तेरजादेशगमेश्च (४) दीर्घः स्याज्झलादौ सनि।

---

(२) सनः कित्त्वेन गुणाप्रसक्तेरेच्सम्भवाभावान्नात्त्वम्।

(३) पूर्वसूत्रादिको ऽनुवर्त्तनेऽपि तस्य हलन्त्यवत्त्वासम्भवेन समीपवाची अन्तशब्द इत्याह इक्समीपादिति सौत्रत्वात् विशेषणस्यान्तशब्दस्य परनिपातः।

(४) गमः सामान्येन ग्रहणे गम्धातोरपि सञ्जिगंसते इत्यत्र स्यादतः सनि च (उ२००पृ०) इङश्चेति (उ२००पृ०) सूत्राभ्यां कृतादेशस्य इणवदिक (उ११६पृ०) इत्यतिदिष्टस्य च ग्रहणमित्याशयेनाऽजादेशेति

सन्लिटोर्जेः (७६८सू०)। जिगीषति। विभाषा चे (७१४५सू०)। चिकीषति। जिघांसति।

सनि च। २।४।४७।

इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने प्रतीषिषति। इणवदिकः (७१८सू०)। अधिजिगमिषति। कर्म्मणि तङ्, परस्मैपदेष्वित्युक्ते (७१०२सू०) नेट्। झलादौ, सनीति (७१८८सू०स्व०) दीर्घः। जिगांस्यते। अधिजिगांसते। अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः। जिगंस्यते। सञ्जिगंस्यते *।

इङश्च। २।४।४।

इङो गमिः स्यात्सनि। अधिजिगांसते।

रलो व्युपधाद्धलादेः संश्च। १।२।२६।

उश्च इश्च वौ ते उपधे यस्य तस्माद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतिस्वाप्योः सम्प्रसारणम् (७१८सू०) दिद्युतिषते—दिद्योतिषते। रुरुचिषते—रुरोचिषते। लिलिखिषति-लिलेखिषति। रलः किम्। दिदेविषति। व्युपधात्किम्। विवर्त्तिषते। हलादेः किम्। एषिषिषति। इह नित्यमपि द्वित्वं गुणेन बाध्यते उपधाकार्य्यं हि द्वित्वात्प्रबलम् ओणेर्ऋद्दित्करणस्य सामान्यापेक्षज्ञापकात्।

सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। ७।२।४९।

---

* सञ्जिगंसते इत्यत्र समो गम्यृच्छिभ्याम् (७४३८०) इति तङ्

इवन्तेभ्यं ऋधादिभ्यश्च सन इड्वा स्यात्। इडभावे हलन्ता-च्चेति (उ१८८पृ०) कित्त्वम्। च्छ्वोरिति (उ१६८पृ०) वस्य ऊठ्। यण्। द्वित्वम्। दुद्यूषति—दिदेविषति। स्तौतिण्योरेवेति (उ२०४पृ०) वक्ष्यमाणनियमान्न षः। सुस्यूषति—सिसेविषति।

## आप्ज्ञप्यृधामीत्। ७। ४। ५५।

एषामच इत्स्यात्सादौ सनि।

## अत्र लोपोऽभ्यासस्य। ७। ४। ५८।

सनि मीमेति (उ२०२पृ०) आरभ्य यदुक्तन्तत्राभ्यासस्य लोपः स्यात् आप्तुमिच्छति ईप्सति अर्द्धितुमिच्छति रपरत्वम् चर्त्वम्। ईर्त्सति अर्दिधिषति। बिभ्रज्जिषति बिभर्जिषति—बिभ्रक्षति—बिभर्क्षति।

## दम्भ इच्च। ७। ४ ५६।

दम्भेरच इत्स्यादीच्च सादौ सनि। अभ्यासलोप। हलन्ताच्चेत्यत्र (उ१८८पृ०) हल्ग्रहणं जातिपरमित्युक्तम्। तेन सनः कित्त्वान्नलोपः। धिप्सति धीप्सति-दिदम्भिषति। शिश्रीषति-शिश्रयिषति। उदोष्ठ्यपूर्वस्य (उ२८पृ०)। सुस्वूर्षति सिस्वरिषति। युयूषति-यियविषति। ऊर्णुनूषति ऊर्णुनुविषति-ऊर्णुनविषति। न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम् द्विर्वचनेऽचीति (उ२३पृ०) सूत्रेण द्वित्वे कर्त्तव्ये स्थानिरूपातिदेशादादेशनिषेधात्। न च सवर्णस्य द्वित्वम्प्रति कार्य्यित्वाभिमिरतता कथमिति वाच्यम् "कार्य्यमनु-

भवन् हि कार्य्यो निमित्ततया नाश्रीयते" न त्वननुभवन्नपि न चेह सन् इत्वमनुभवति। बुभूर्षति बिभरिषति। ऋपिः पुनन्तो निर्त्तः (उ ०पृ०) पकारान्तत्वस्य निर्देशः। इकः झलीति इको झलिति (उ०६८४पृ०) कित्त्वान्न गुणः (५)। अज्झनेति (उ०८८पृ०) दीर्घः परत्वाण्णिलोपेन बाध्यते। आप्ज्ञपीति (उ२०१पृ०) ईत्। ईप्सति—जिज्ञपयिषति। अमितत्सु। जिज्ञापयिषति। जनसनेत्यात्वम् (उ २२पृ०)। सिषासति—सिसनिषति। तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः।

## तनोतेर्विभाषा। ६।४।१७।

अस्योपधाया दीर्घो वा स्याज्झलादौ सनि। तितांसति—तितंसति—तितनिषति। आशङ्कायां सन्वक्तव्यः *। श्वा मुमूर्षति (६)। कूलम्पिपतिषति।

## सनि मीमाघुरभलभशकपतपदामच इस्। ७।४।५४।

एषामच इस् स्यात्सादौ सनि अभ्यासलोपः। स्कोरिति (पृ१६६पृ०) सलोपः। पित्सति। दिदरिद्रिषति—दिदरिद्रासति। डुमिञ् मीञ् आभ्यां सन् कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषादिस्। सः सीति (७७६पृ०) तः। मित्सति। मित्सते। मा माने मित्सति। माङ्मेङोः। मित्सते। दोदीर्णाः। दित्सति। देङ्। दित्सते। दाञ्। दित्सति।

---

(५) न गुण इति णिच इक इतिशेषः।

(६) एकश्वविषयमरणाशङ्केति बोधः।

दित्सते। धेट्। धित्सति। धाञ्। धित्सति। धित्सते। रित्सते। लिप्सते। शक्लृ। शिक्षति। शक मर्षण इति (उ।३८पृ०) दिवादिः। स्वरितेत्। शिक्षति-शिक्षते। पित्सते। राधो हिंसायां सनीस् वाच्यः*। रित्सति। हिंसायां किम् आरिरात्सति।

मुचोऽकर्मकस्य गुणो वा (७)। ७। ४। ५७।

सादौ सनि। अभ्यासलोपः। मोक्षते-मुमुक्षते वत्सः स्वयमेव। अकर्मकस्य किम् मुमुक्षति वत्सं कृष्णः। न वृद्भ्यश्चतुर्भ्यः उ।७८पृ०)। विवृत्सति। तङि तु। विवर्त्तिषते। सेऽसिचीति उ।२०पृ०) वेट्। निनर्त्तिषति–निनृत्सति।

इट् सनि वा। ७। २। ४१।

वृङ्वृञ्भ्यामृदन्ताच्च सन इड्वा स्यात्। तितरिषति तितरीषति-तितीर्षति। विवरिषति-विवरीषति वुवूर्षति। वृङ्। वुवूर्षते-विवरिषते विवरीषते।

स्मिपूङ्रञ्ज्वशां सनि। ७। २। ७४।

स्मि पूङ् ऋ अञ्जू अश् एभ्यः सन इट् स्यात्। सिस्मयिषते। पिपविषते। अरिरिषति। इह रिस्शब्दस्य (८) द्वित्वम् इस् इति सनाऽवयवः कार्य्यभागिति कार्य्यिणो निमित्तत्वायोगात्

---

(७) हलन्ताच्चेति (उ।८८पृ०) कित्त्वेन गुणाप्रसङ्गे विकल्पेन विधानार्थमारम्भः

(८) सनि इटि गुणे च कृते अरिस इति स्थिते अजादेर्द्वितीयस्येति (उ८पृ०) रिस्शब्दस्य द्वित्वमित्यर्थः।

द्विर्वचनेऽचीति (७२४पृ०) न प्रवर्त्तते। अञ्जिजिषति। अग्निग्निषते (९)। उभौ साभ्यासस्य (७१३६पृ०)। प्राणिणिषति। छ्छेः तुक् (पू७०पृ०सू०) चुत्वम्। पूर्वत्रासिद्धीयमद्वित्व इति चकाराभ्यां सहितस्येटो द्वित्वं हलादिः शेषः (७८पृ०)। ऋचिच्छिषति। "निमित्तापाये नैमित्तिकापाय" इति त्वनित्यम् च्छोरिति (७१६९पृ०) सतुक्ग्रहणात् ज्ञापकात्। प्रकृतिप्रत्यापत्तिवचनाद्वा णौ च संश्चङोरिति (७१८०पृ०) (७१८५पृ०)। सूत्राभ्यां (१०) इङो गाङ् श्वयतेः सम्प्रसारणञ्च वा। अधिजिगापयिषति-अध्यापिपयिषति। शिश्वाययिषति-शुशावयिषति। ह्वः सम्प्रसारणम् (७१८२पृ०)। जुहावयिषति। णौ द्वित्वात्प्रागच आदेशो नेत्युक्तत्वात् (७१८३पृ०) उकारस्य द्वित्वम्। पुस्फारयिषति। चुच्चावयिषति। ओः पुयण्ज्यपरे (७१८६पृ०)। पिपावयिषति। यियावयिषति। बिभावयिषति। रिरावयिषति। लिलावयिषति। जिजावयिषति। पुयण्जि किम्। नुनावयिषति। अपरे किम् बुभूषति। स्रवतीतीत्त्वं (७१८६पृ०) वा। सिस्रावयिषति-सुस्रावयिषतीत्यादि। अपर इत्येव। शुश्रूषते।

## स्तौतिण्योरेव षण्यभ्यासात्। ८। ३। ६१।

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य। तुष्टूषति। स्मिपूङ्रञ्ज्वशां सनि (७७पृ०) इत्युत्त्वम्। सुष्वापयिषति। सिषाधयिषति। स्तौतिण्योः किम् सिसिक्षति

(९) अनञ्जू व्यक्तिम्रक्षणादौ अग्नूङ् व्याप्तौ अनयोरुदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् अनेन विहितः।

(१०) एवञ्चैतं सूत्रद्वयमेकं द्वितीयेऽपरं पक्षे तत्राद्ये गाङादेशो, द्वितीये सम्प्रसारणम्।

उपसर्गात्तु स्वादिष्वभ्यासेन चेति (उ२८४०) षत्वम्। परि—षिषिक्षति। षणि किम् तिष्ठासति। सुषुप्सति। अभ्यासादित्युक्तेर्नेह निषेधः। इण्। प्रतीषिषति (१)। इक्। अधीषिषति।

## सः स्विदिस्वदिसहीनाञ्च। ८।३।६२।

अभ्यासेण्परस्य एयन्तानामेषां सस्य स एव न ष षणि परे। सिस्वेदयिषति। सिस्वादयिषति सिसाहयिषति। स्थादिष्वेवाभ्यासस्येति (उ२०४०) नियमान्नेह। अभि—सुसूषति।

ग्रैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।

सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥

ग्रैषिकाच्छैषिकः सरूपो न। तेन शालीये भव—इति वाक्यमेव न तु छान्ताच्छः। सरूपः किम् अहिच्छत्रे भव आहिच्छत्रः। आहिच्छत्रे भव आहिच्छत्रीयः। अणन्ताच्छः। तथा मत्वर्थात् सरूपः स न। धनवानस्यास्ति इह मतुबन्तान्मतुब् न। विरूपस्तु स्यादेव। दण्डिमती शाला। सरूप इत्यनुषज्यते अर्थद्वारा सादृश्यन्तस्यार्थः। तेन इच्छासन्नन्तात् सन् न, स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमांसिषते।

इति सन्प्रक्रिया।

---

(१) इह प्रभृते सनि इण् गताविति धातोः परस्य सस्य षत्वं भवत्येव॥

धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। ३।१।२२।

पौनःपुन्यम्भृशार्थश्च क्रियासमभिहारस्तस्मिन् द्योत्ये यङ् स्यात्।

गुणो यङ्लुकोः। ७।४।८२।

अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। सनाद्यन्ता इति (७५७पृ०) धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्। पुनःपुनरतिशयेन वा भवति। बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः (१) किम् आर्द्धधातुकत्वं यथा स्यात्। तेन बोभूयिति (३११७पृ०) रित्यादि। एकाचः किम् पुनः पुनर्ज्जागर्त्ति। हलादेः किम् भृशमीक्षते। भृशं शोभते रोचते इत्यत्र यङ्नेति भाष्यम्। पौनःपुन्ये तु स्यादेव। रोरुच्यते। शोशुभ्यते। सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः *। आद्यास्त्रयश्चुरादावदन्ताः। सोसूच्यते। सोसूत्र्यते। अनेकाच्त्वेनाषोपदेशत्वात् षत्वन्न।

यस्य हलः। ६।४।४९।

यस्येति सङ्घातग्रहणम् (२)। हलः परस्य यशब्दस्य लोपः

(१) क्रियासमभिहार इत्यनेनैव धातुलाभेऽपि धातुग्रहणस्य फलं प्रतिपादयितु पृच्छति धातोः किमिति वावच्यते वाख्यायते इत्यादिरूपसिद्धिस्तत्फलमित्यर्थः। धातुग्रहणाभावे भिगित्यव्ययादपि स्यात् तस्य क्रियावाचित्वादेकाच्त्वाच्चेति तु नव्याः।

(२) सघानोऽकारयकारसमुदायः तेन क्षयितेत्यादौ न यलोपः। सङ्घातग्रहणेन चार्थवत् (४५पृ०) परिभाषोपस्थित्या पुत्रंकाम्येत्यादौ नातिप्रसङ्गः यवर्णमात्रग्रहणे तु परिभाषानुपस्थितेः स्यादेवेति भावः।

स्यादार्धधातुके। आदेः परस्य (पृ०८६सू०)। अतो लोपः (७५७सू०) सोसूचाञ्चक्रे। सोसूचिता। सोसूत्रिता। मोमूत्रिता।

## दीर्घोऽकितः। ७। ४। ८३।

अकितो (३)ऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। अटाट्यते।

## यङि च। ७। ४। ३०।

अर्त्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि। यकारपररेफस्य (७११५पृ०सू०) न द्वित्वनिषेधः अरार्य्यते इति भाष्योदाहरणात् (४) अरारिता। अशाश्विता। जर्णोनूयते। बेभिद्यते। अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः। बेभिदिता।

## नित्यङ्कौटिल्ये गतौ। ३। १। २३।

गत्यर्थात् कौटिल्य (५) एव यङ् स्यान्न तु क्रियासमभिहारे कुटिलं व्रजति वाव्रज्यते।

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्। ३। १। २४।

---

(३) अभ्यासविकारेषु उत्सर्गविधीन् बाधका न बाधन्ते इति ज्ञापयितुमाह अकित इति तेन जञ्जभ्यते इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घः स्यादिति तद्वारणार्थमकितइत्युक्तम्।

(४) भाष्योदाहरणस्य सामान्येन ज्ञापकतया आर्य्यमाख्यत् आरर्यदित्यादि सिध्यति।

(५) नित्यशब्दोऽवधारणार्थक इत्याह कौटिल्ये एवेति।

एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति । लोलुप्यते । मासद्यते ।

चरफलोश्च । ७ । ४ । ८७ ।

अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते । स च पदान्तवद्वाच्यः । वा पदान्तस्येति (पू६१४पृ०) यथा स्यात् ।

उत्परस्यातः । ७ । ४ । ८८ ।

चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । हलि चेति (पू१५७पृ०) दीर्घः । चंचूर्यते चञ्चूर्यते । पम्फुल्यते — पंफुल्यते ।

जपजभदहदशभञ्जपशाञ्च (६) । ७ । ४ । ८६ ।

एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितञ्जपति । जञ्जप्यते इत्यादि ।

ग्रो यङि । ८ । २ । २० ।

गिरते रेफस्य लत्वं स्याद्यङि । गर्हितङ्गिलति । जेगिल्यते । घुमास्थेति (उ१८४पृ०) ईत्त्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । विभाषा श्वे (उ१०८पृ०) । शोशूयते शेश्वीयते । यङि च (उ२०७पृ०) सास्मर्यते । रीङ् ऋतः (पू१२२पृ०) चेक्रीयते । स्रट् । सञ्चेस्क्रीयते ।

सिचो यङि । ८ । ३ । ११२ ।

---

(६) पठञ्जनुदर्न्त्यान्तः सात्रोगः प्रथं दृश्येके काशिकायाम्तु तालव्यान्त ।

सिच: सत्वं णो न स्याद्यङि। नि-सेसिच्यते (७)।

## न कवतेर्यङि। ७।४।६३।

कवतेरभ्यासस्य चुत्वन्न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु (८)। चोकूयते।

## नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसंपतपद्स्कन्दाम्। ७।४।८४।

एषामभ्यासस्य नीगागम: स्याद्यङ्यङ्लुको:। अकित इति-(उ२०७पृ०) उक्तेर्न दीर्घ:। नलोप:। वनीवच्यते। सनीस्रस्यते इत्यादि।

## नुगतोऽनुनासिकान्तस्य। ७।४।८५।

अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। नुकानुस्वारौ लक्ष्यत इत्युक्तम् (उ२०८पृ०) यँय्यम्यते—यंयम्यते। तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न। भाम क्रोधे। बाभाम्यते। ये विभाषा (उ६१पृ०)। जाजायते—जञ्जन्यते। हन्तेर्हिंसायां यङि घ्नीभावो वाच्य: *। जेघ्नीयते। हिंसायाम् किम् जङ्घन्यते।

## रीगृदुपधस्य च। ७।४।९०।

ऋदुपधस्य धातोरभ्यासस्य रीगागम: स्याद्यङ्यङ्लुको:। वरीवृत्यते। क्षुभ्नादित्वान्न (पू३८३पृ०) णः। नरीनृत्यते।

---

७) अभ्यासस्कारस्य उपसर्गात् सुनोतीति (उ३७पृ०) अभ्यासात् परस्य त स्यादिष्वभ्यासेनेति (उ३९पृ०) षत्वे प्राप्ते सिचो यङीति निषेधारम्भ :

८) कवतेरिति श्तिपा निर्देशफलमाह कौतिकुवत्योस्त्विति।

जरीगृह्यते । उभयत्र सत्वम् । चलीक्लृप्यते । दीर्घत्वम् इति वक्तव्यम् । वरीवृश्च्यते । परीपृच्छ्यते ।

**स्वपिस्यमिव्येञां यङि । ६ । १ । १९ ।**

सम्प्रसारणं स्यात् यङि । सोषुप्यते । सेसिम्यते । वेवीयते ।

**न वशः । ६ । १ । २० ।**

वावश्यते ।

**चायः की (८) ६ । १ । २१ ।**

चेकीयते ।

**ई घ्राध्मोः । ७ । ४ । ३१ ।**

जेघ्रीयते । देध्मीयते ।

**अयङ् यि क्ङिति । ७ । ४ । २२**

शीङोऽयङादेशः स्याद्यादौ क्ङिति परे । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते । तोत्रौक्यते ।

इति यङ्प्रक्रिया ।

---

(८) यङि परे चायः की स्यात् दीर्घोच्चारणम् यङ्लुगर्थम् ।

ह्म्यन्तेति न (७५३पृ०) वृद्धिः अजङ्गमीत्। अजङ्गमिष्टाम्। हन्तेर्यङ्लुकि (१०)। अभ्यासाच्चेति (७११०पृ०) कुत्वम्। यद्यपि हो हन्तेरित्यतो (७५८पृ०) हन्तेरित्यनुवर्त्य विहितम्। तथापि यङ्लुकि भवत्येवेति न्यासकारः। श्तिपा शपेति (७७५पृ०) निषेधस्त्वनित्यः गुणो यङ्लुकोरिति (७२०६पृ०) (११) सामान्यापेक्षज्ञापकादिति भावः। जङ्घनीति जङ्घन्ति। जङ्घतः। जघ्नति। जङ्घनिता। श्तिपा निर्देशाज्जादेशो (७१११पृ०) न। जङ्घहि। अजङ्घनीत्—अजङ्घन्। जङ्घन्यात्। आशिषि तु। वध्यात् (१२)। अवधीत् अवधिष्टामित्यादि। वधादेशस्य द्वित्वं न भवति स्थानिवत्त्वेनानभ्यासस्येति (७८४पृ०) निषेधात्। तद्धि समानाधिकरणस्य धातोर्विशेषणम् बहुव्रीहिबलात्। आङ्पूर्वात्तु आङो यमहन (७५४पृ) इत्यात्मनेपदम्। आजङ्घते इत्यादि। उत्परस्येति (७२०८पृ) तपरत्वान्न गुणः। हलि चेति (७५०पृ) दीर्घस्तु स्यादेव तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्। चञ्चुरीति—चञ्चूर्त्ति। चञ्चूर्त्तः। चञ्चुरति।

(१०) हन्तेरित्यनुवर्त्तने तस्य श्तिपा निर्देशात् यङ्लुकि कुत्वं न भवतीत्याशङ्क्य तन्निषेधस्यानित्यतया कुत्वमिति समाहितम्।

(११) सामान्यापेक्षेति। एकाचो द्वे (७२६पृ०) इत्यत्रैकाज्ग्रहणात् यङ्लुकि द्वित्वं क्वापि न भवति तथा च गुणो यङ्लुकोरिति (७२०६पृ०) अभ्यासस्य विहितो गुणो विषयमलभमानः श्तिपेत्यादिनिषेधस्य क्वचित् यङ्लुक्यप्रवृत्तिं ज्ञापयति।

(१२) वध्यादिति कृतद्वित्वस्यापि हन स्थाने वधादेश इति सिद्धान्तः तेन पुनर्न द्वित्वं तत्र हेतुमाह स्थानिवत्त्वेनेति अनभ्यासस्येति किन्तु धातोरनभ्यासस्येति (७८४पृ) इत्यत्रानभ्यासपदं नास्ति अभ्यासो यस्येति बहुव्रीहिसमासः तच्च धातोर्विशेषणं तेन कृतधातोरभ्यस्ततया तदादेशवधस्याप्यभ्यस्तत्वान्न द्वित्वमिति भावः।

अचञ्चुरीत्—अचञ्चः। चञ्चरीति-चञ्चन्ति। जनसनेत्यात्वम् (उ।२२४।)चञ्चातः। गमहनेति (उ६८५०) उपधालोपः। चञ्चति। चञ्चाहि। चञ्चानि। अचञ्चनीत् अचञ्चन्। अचञ्चाताम्। अचञ्चुः। ये विभाषा (उ६ ५०) चञ्चायात् चञ्चन्यात्। अचञ्चानीत्। उतो वृद्धिरित्यत्र (उ४४) नाभ्यस्तस्येत्य (उ।७ ५।म।) नुवृत्तेरुतो वृद्धिर्न। यायेति यायवीति। अयायवीत् अयायो-त। यायुयात। आर्धधातुके दीर्घ। यायूयात्। अयायायावीत्। नोनवीति नोनोति। जाहेति-जाहाति। ई हल्यघोः (उ ४ ७५) जाहीतः। इह जहातेश्च (उ ४ २५)। आ च हौ (उ।२०५) लोपो यि (उ।४।२) घुमास्था (उ।६४) एलिंडीत्येते (उ६४५) यङ्लुकि न भवन्ति श्तिपा निर्देशात्। जाहाति। जाहासि-जाहेषि। जाहीथ। जाहीथ। जाहीहि। अजाहेत् अजाहात्। अजाहीताम्। अजाहुः। जाहीयात्। आशिषि। जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्। लुका लुप्ते प्रत्ययलक्षणाभावात् स्वपिस्यमीत्युक्तं (उ। ५।) न। रुदादिभ्य इति(५।२२५)गणनिर्दिष्टत्वादिण्। सास्वपीति-सास्वप्ति सास्वप्तः। सास्वपति। असास्वपीत् असास्वप्। सास्वप्यात्। आशिषि तु। वचिस्वपीत्युक्तम् (उ। ५।)। सासुप्यात्। असास्वापीत्-असास्वपीत्।

रुग्रिकौ च लुकि। ७।४।९१।

ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि।

ऋतश्च। ७।४।९२।

ऋदन्तधातोरपि तथा। वर्वृतीति—वरिवृतीति—वरीवृतीति। वर्वर्त्ति—वरिवर्त्ति—वरीवर्त्ति। वर्वृत्तः। वर्वृतति। वर्वर्त्तामास। वर्वर्त्तिता। गणनिर्दिष्टत्वान्न वृद्भ्यः। इति (३७६सू०) न। वर्वर्त्तिष्यति। अवर्वृतीत्—अवर्वर्त्। सिपि दश्चेति (३०७सू० रुत्वपक्षे रोरि ५८०सू०)। अवर्वाः। गणनिर्दिष्टत्वादड् न। अवर्वर्त्तीत्। चर्करीति चर्कर्ति-चरिकर्त्ति-चरीकर्त्ति। चर्कृतः। चर्क्रति। चर्करांचकार। चर्करिता अचर्करीत्-अचर्कः। चर्कृयात्। आशिषि रिङ्। चर्क्रियात्। अचर्कारीत्। ऋतश्चेति तपरत्वान्नेह। कॄ विक्षेपे। चाकर्त्ति। तातर्त्ति। तातीर्त्तः। तातीर्हि। तातराणि। अतातरीत् अतातः। अतातीर्त्ताम्। अतातरुः। अतातारीत्। अतातारिष्टामित्यादि। अर्त्तेर्यङ्लुकि द्वित्वेऽभ्यासस्य उरत्वं रपरत्वम्। हलादिः शेषः ७८६सू०। रुक्। रिगौकाम् अभ्यासस्यासवर्णे इति ३०१सू०)। इयङ्। अरर्त्ति—अरियर्त्ति-अररीति अरियरीति। अरृतः। अरियृतः। झि, अत्, यण्। रुको रोरीति ५८०सू० लोपः। नच तस्मिन् कर्त्तव्ये यणः स्थानिवत्त्वम् पूर्वत्रासिद्धे तन्निषेधात्। अरति। अरियृति। लिङि। श्तिपा निर्देशाद् यङ्लुगन्तानामिति ७८६सू०)गुणो न। रिङ्। यलोप, दीर्घ। अरियात अरिरियात् अरीरियात्। ग्रह उपादाने। जर्गृहीति-जर्गर्ढि। जर्गृढः। जर्गृहति। अजर्घट्। ग्रहणम्। जाग्रहीति जाग्राढि। तस्मादौ ङ्विनिमित्तं सम्प्रसारणम् तस्य बहिरङ्गत्वनासिद्धत्वान्न रुगादयः। जाग्रह्। जाग्रहति। जाग्रहीषि जाग्रक्षि। लुटि। जाग्रहिता। यङोऽनि

जाहसि। वलि (पृ॰४२१ सू॰ ) लोपे। यञादौ (८८ सू॰) दीर्घः। जाहामि। जाहावः। जाहामः। हर्य्य गतिकान्त्योः। जाहर्य्यीति—जाहर्त्ति। जाहर्त्त। जाहर्य्यति। लोटि। जाहर्हि। अजाहः। अजाहर्त्ताम्। अजाहर्युः। मव बन्धने।

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च। ६।४।२०।

ज्वरादीनामुपधावकारयोरूट् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्त्तते अवतेस्तुनि ओतुरिति दर्शनात्। अनुनासिकग्रहणञ्चानुवर्त्तते अवतेर्मनिन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात्। इड-भावे ऊठि पिति गुणः। मामोति—मामवीति। मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः। मामोतु। मामूतात्। मामूहि। मामवानि। अमामोत्। अमामोः। अमामवम्। अमामाव। अमामूम। तुर्वी हिंसायाम्। तोतूर्व्वीति।

## राल्लोपः। ६।४।२१।

रेफाच्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। (३१ पृ॰ सू॰) लघूपधगुणः।

## न धातुलोप आर्द्धधातुके। १।१।४।

धात्वंशलोपनिमित्ते (१४) आर्द्धधातुके परे इकः गुणवृद्धी

---

(१४) अर्द्धधातुके धातुलोपो नास्तीति [illegible] धातुपदं धात्वंशपरं [illegible] [illegible] न [illegible]। [illegible] [illegible] [illegible]

न स्तः। इति नेह निषेधः तिबादीनामनार्धधातुकत्वात्। हलि चेति (८।२।७७) दीर्घः। तोतूर्त्तः। तोतुर्वति। तोतोर्षि। दादोर्ष्मि। दाधोर्ष्मि। मूर्च्छा। मोमोर्त्ति। मोमूर्त्तः। मोमूर्च्छतीत्यादि। आर्धधातुके (१५) इति विषयसप्तमी तेन यङि विवक्षिते अजेर्वी। वेवीयते। अस्य यङ्लुङ्नास्ति लुका अपहारेण विषयत्वासम्भवेन वीभावस्याप्रवृत्तेः।

इति यङ्लुक्प्रक्रिया।

---

धातुलोपपदं निमित्तपरं तत्रार्धधातुकविशेषणमित्याह लोप-निमित्त इति यत्रार्धधातुके लोपस्तु निर्निमित्तः तत्रार्धधातुके न गुणवृद्धिनिषेध इत्युक्तं ... प्राक्। प्राञ्चस्तु धातुलोपे सति आर्धधातुके परे गुणवृद्धिनिषेधं वदन्ति मर्मृजिता मर्मार्जितेत्युदाहृतः।

(१५) अभिहितं इत्यादि आर्धधातुके इत्यस्य अजेर्वीभावविधानात्।

**सुप आत्मनः क्यच्। ३। १। ८।**

इषिकर्मणः (१) एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्-प्रत्ययो वा स्यात्। धात्ववयवत्वात् सुब्लुक् (१२०पृ०म०)।

**क्यचि च। ७। ४। ३३।**

अस्य ईः स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। वान्तो यि प्रत्यये (४९पृ०)। गव्यति। नाव्यति। लोपः शाकल्यस्येति (२८पृ०) तु न पदान्तत्वात् तथाहि।

**नः क्ये। १। ४। १५।**

क्यचि क्यङि (२) च नान्तमेव पदं स्यान्नान्यत्। सन्निपातपरिभाषया (३) क्यचो यस्य लोपो न। गव्याञ्चकार। गव्यिता। नाव्याञ्चकार। नाव्यिता। नलोपः (२६पृ०म०)। राजीयति (४)।

---

(१) धातोः कर्मणः (... १८पृ०) इति सूत्रादिच्छायामिति, कर्मण इति, वेति चानुवर्त्तते तत्र च सन्निधानादिच्छायाः एव कर्मण इत्यस्य इच्छाकर्मण [illegible] इषिकर्मण इत्यादि। परस्य पुत्रमिच्छतीत्यादावतिप्रसङ्गवारणाय सूत्रे आत्मन इत्युपात्तम् [illegible] सन्निधानादिच्छाकर्त्तरि वर्त्तते इत्याशयेनाह एषितृसम्बन्धिन इति सुबन्तयोः [illegible] बोध्यम्। ततः।

(२) हलन्तात् क्यङ् दुर्लभ इत्याशयेनाह [illegible]।

(३) यस्य हल इति (३० १८) लोपस्यासिद्धत्वात् सन्निपातेति। यकारं परं वा- [illegible] निमित्तं न भवतीति भावः। ततः।

(४) क्यचि चेति [illegible] नियमात्।

प्रत्ययो नरपदर्योश्च (प५१८पृ०)। स्वस्यति। मध्यति। एकार्थयो-रित्येव। युष्मद्यति। अस्मद्यति। हलि च (प५७पृ०)। गीर्यति। पूर्यति। धातोरित्येव। नेह। दिवमिच्छति दिव्यति। इह पुरमिच्छति पुर्यतीति माधवोक्तमप्युदाहरणमिदम् पुंलिं-ङ्गः साम्यात्। दीव्यतीति दीर्घस्तु प्रायः प्रामादिक (५) एव। घटस्यति। रीङृत (३५११पृ०) कर्त्रीयति।

क्यच्व्योश्च (१२०पृ०) (६)। गार्गीयति। वाच्यति (७)। अकृ-त्सार्वेति (३५पृ० दीर्घः)। कवीयति। समिध्यति।

**क्यस्य विभाषा। ६। ४। ५०।**

हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके। आदेः परस्य (प७६पृ०)। अतो लोपः (३५१पृ०)। तस्य स्थानिवत्त्वाल्लघूपधगुणो (३२पृ०) न। समिधिता समिध्यिता। मान्तप्रकृतिक (८) सुबन्ता-द्व्ययाच्च क्यच् न। किमिच्छति। इदमिच्छति। स्वरिच्छति।

**अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु। ७। ४। ३४।**

---

(५) प्रामादिक इति दिवधातौ क्विपि द्युरिति तत क्यचि द्युयतीत्येव भवति क्विचि तु उपधागुणे देविति स्यात् तत क्यचि देव्यतीति स्यात्। दिवमिच्छति दिव्यतीति तु अप्रत्ययान्तदिवशब्दस्येति बोध्यम्।

(६) अपत्यप्रत्यययाकारलोपं कारयति क्यच्व्योश्चेति।

(७) न क्ये इति (३२२०पृ०) नियमेन पदत्वाभावात् कुत्वं नेत्युदाहरति वाच्यतीति।

(८) मान्ताव्ययेभ्य प्रतिषेधो वक्तव्य " इति वार्तिकस्य यथाश्रुतव्याख्याने पुरमिच्छतीत्यत्रापि न स्यात् तस्य मान्तत्वात् किन्तु पुमो पुमान् वा —गोत्यादावेव स्यादतो व्याचष्टे मान्तप्रकृतिकेति।

अजन्ता निपात्यन्ते । अशनायति (९) । उदन्यति । धनायति । बुभुक्षादौ किम् अशनीयति । उदकीयति । धनीयति ।

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ७ । १ । ५१ ।**

एषां क्यचि असुगागमः (१०) स्यात् । अश्ववृषयोर्मैथुनेच्छायाम् * । अश्वस्यति वडवा । वृषस्यति गौः । क्षीरलवणयोर्लालसायाम् * । क्षीरस्यति बालः । लवणस्यति उष्ट्रः । सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ * । दधिस्यति ‡ । दध्यस्यति । मधुस्यति । मध्वस्यति ।

**काम्यच्च । ३ । १ । ९ ।**

उक्तविषये (११) काम्यच् स्यात् । आत्मनः पुत्रमिच्छति पुत्रकाम्यति । पुत्रकाम्यिता । इह यस्य हल इति (२४६१) लोपो न, अनर्थकत्वात् यस्येति सङ्घातग्रहणमित्युक्तम् (३११९०) । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति । स्वःकाम्यति ।

**उपमानादाचारे । ३ । १ । १० ।**

---

(९) सद्योभोजनेच्छा बुभुक्षा सद्य उदकपानेच्छा पिपासा भवतोऽपि धनेच्छा गर्द्धः । प्रत्युदाहरणे तु कालान्तरोपयोगिभोजनोदकेच्छाया दरिद्रस्य च धनेच्छाया बोध्यम् ।

(१०) क्य. असुगागमनिष्कृतौ (उ५००पृ.) सुगित्यनुवर्तते ।

(११) उक्तविषय इति इषिकर्मणः एषितुः सम्बन्धिनः सुबन्तादिच्छायामित्यर्थः ।

‡ सुक. आगमत्वं नादत्तमनुबन्धा इति (निदमात् १.१.४७.) बलात् ।

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। अधिकरणाच्चेति वक्तव्यम्। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे।

## कर्त्तुः क्यङ् सलोपश्च। ३। १। ११।

उपमानात्कर्त्तुः सुबन्तादाचारे क्यङ् वा (१२) स्यात्। सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। क्यङि विवक्षिते पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः।

"ओजसोऽप्सरसो नित्यमितरेषां विभाषया"।

कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्तिविषये तद्वति। ओजायते। अप्सरायते। यशायते यशस्यते। विद्वायते विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु। युष्मद्यते। अस्मद्यते। क्यङ्‌ञानिर्नोय (१४)। कुमारीवाचरति कुमारायते। हरिणीवाचरति हरिणायते। गुर्वीव गुरूयते। सपत्नीव—(१३) सपत्नायते सपत्नीयते सपत्नीयते।

---

(१२) धातोः कर्मणः समानकर्तृकादिच्छायां वेत्यतो वेत्यनुवर्त्तते।

(१३) सपत्नीवेति त्रितयसाधारणं वाक्यम्। सपत्नायते इति शत्रुपर्याया-च्छार्ङ्गरवादि (प० ७४ पृ०) ङीनन्तात् सपत्नीशब्दात् क्यङि पुंवद्भावे कृत-सार्व्वेति (७४ पृ०) दीर्घे सिद्धम्। सपत्नीयते इति समानस्वामिकार्थ-वाचिनो भाषितपुंस्कस्य, नित्यं सपत्न्यादिष्विति (प० २२४ पृ०) नादेशे नान्तत्वात् ङीप्, तत्र क्यङि पुंवद्भावे च दीर्घः। सपत्नीयते इति विवाहजन्यसम्बन्धनिमित्तेन पतिशब्देन समासे नित्यस्त्रीत्वात् न पुंवदिति भेदः।

युवतिरिव युवायते। पट्वीमृद्व्याविव पट्वीमृद्वयते (१४)। न कोपधायाः (५०४०८४०)। पाचिकायते। आचारेऽवगल्भक्लीबहोडेभ्यः (१५) क्विब् वा *। वाग्रहणात् क्यङपि। अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वञ्च प्रत्ययस्य प्रतिज्ञायते तेन तङ्। अवगल्भते। क्लीबते। होडते। भूतपूर्वादप्यनेकाच आम् (३५७४ सू०) एतद्वार्त्तिकारम्भसामर्थ्यात्। न च अवगल्भते इत्यादिसिद्धिस्तत्फलम् केवलानामेवाचारेऽपि वृत्तिसम्भवात् धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। होडाञ्चक्रे। वार्त्तिकेऽवेत्युपसर्गविशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः। तङ् नेति तूचितम्। सर्व्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः *। पूर्ववार्त्तिकन्तु अनुबन्धासङ्गार्थन्तच्च क्विबन्तं। प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते तेन पदकार्य्यन्न (१६)। कृष्ण इवाचरति कृष्णति अतो गुण इति (१८४) अपा सह पररूपम्। स इवाचरति अति। अतः। अन्ति। प्रत्ययग्रहणमपनीय अनेकाच (३५७४ सू०) इत्युक्ते नाम। औ। अम्। उ। द्वित्वम्। अतो गुणे (१८५)। अत आदेरिति (२२५०) दीर्घः। णल औ वृद्धिः। अनुमादिषु तु आमो लोप इट् चेति (३२६४ सू०) मालोप। मालेवाचरति मालाति।

---

(१४) पूर्वपदस्य क्यङ्परत्वाभावाद्य पुंवत्।

(१५) गल्भ धाष्टर्ये क्लीब अधाष्टर्ये होडृ अनादरे इत्येतेभ्योऽच् पचाद्यच्।

(१६) पदकार्य्यं नेति तेन नलोपो न तत् स इवाचरति ततति स्वमिवाचरति स्वति इत्यादौ अन्तःस्थं न भवति।

तन्तस् पम्पस् दुःखे । सुख दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखञ्चानुभवतीत्यर्थः । सपर पूजायाम् । आरर आराकर्म्मणि । भिषज् चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण वरण गतौ चुरण चौर्य्ये तुरण त्वरायाम् । भुरण धारणपोषणयोः । गद्गद वाक्स्खलने । एला केला खेला विलासे । इलेत्यन्ये । लेखा स्खलने च । अदन्तोऽयमित्यन्ये । लेख्यति । लिट् अल्पकुत्सनयोः । लिट्यति । लाट जीवने । हृणीङ् रोषणे लज्जायाञ्च महीङ् पूजायाम् । महीयते पूजां लभत इत्यर्थः । रेखा श्लाघासादनयोः । द्रवस् परितापपरिचरणयोः । तिरस् अन्तर्द्धौ । अगद नीरोगत्वे । उरस् बलार्थे । उरस्यति बलवान् भवतीत्यर्थः । तरण गतौ । पयस प्रसृतौ (३) । संभूयस् प्रभूतभावे (४) । अम्बर सम्बर सम्भरणे । आकृति-गणोऽयम् (५) ।

इति कण्ड्वादयः ।

---

(३) प्रसृतिरत्र परिमाणविशेषः ।

(४) प्रभूतभावः बाहुल्यं इत्यर्थः नेह समस्तस्य पृथक्कृतिर्यत्र प्रातिपदिकाद्धात्वर्थे प्रयोजकप्रत्ययविधानं तत्रैवोपसर्गस्य पृथक्कृते ओकारादेः तस्य न स्यात् धातुत्वादत्र सम्भूयस्यतीत्येव रूपम् ।

(५) आकृतिगण इति तेन दुवस्यति महीयते इत्यादि सिद्धम् कतिपयानि दुःख्यते इत्यादि मात्र । अन्यत्र नमस् मान् आप इत्यादयो.अत्र पठिताः

कण्डूयतेः सन् सन्यङोरिति (७० सू०) प्रथमस्यैकाचो (७८ सू० सू०) द्वित्वे प्राप्ते (१) । कण्ड्वादेस्तृतीयस्येति वाच्यम् * । कण्डूयियिषति । क्यजन्तात्सन् । यथेष्टमामधातुष । । प्राद्यानामवयवानामन्यतमस्य द्वित्वमित्यर्थः । पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति । अजादेस्तृतीयस्य । अशिश्वीयिषति अश्वीयियिषति । नदराणां संयुक्तानामच परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सन् । द्वौ प्रस्थितौ प्रस्थयोरन्यतरस्य द्वित्वम् । इन्दिद्रियिषति इन्द्रीयियिषति । चिचन्द्रीयिषति चान्द्रीयिषति चन्द्रीयियिषति । प्रियमाख्यातुमाचक्षाणं प्रेरयितु वेच्छति । पिप्रापयिषति प्रापिपयिषति । प्रापयियिषति । उदकम्-विवारयिषति वारिरयिषति वारयियिषति । आढम्-मिमाधयिषतीत्यादि रूपत्रयम् । षत्वन्तु नास्ति (२) । यङ्सन् ण्यन्तात्सन् । बोभूयिषयिषति । यङ्णिच्सनन्तात्सन् । बोभूययिषतीत्यादि (३) ।

इति प्रत्ययमाला ।

(१) प्रथमस्येति अजादेस्तु द्वितीयस्य (७८ सू० सू०) द्वित्वे प्राप्ते इत्यपि बोध्यम् ।

(२) षत्वं तु नास्तीति आदेशावयवत्वाभावात् आदेशप्रत्ययोरिति (५८ सू०) सूत्रे प्रत्ययस्यावयवग्रहणात् ।

(३) इह यङ् निमित्ते द्वित्वे कृते सन्निमित्तं द्वित्वन्तु न सिद्धं धातोरनभ्यासस्येति (७८ सू०) अनभ्यासस्येति निषेधात् ।

अनुदात्तङित आत्मनेपदम् (३।४सू०) आस्ते । शेते ।

भावकर्मणोः (१) । १ । ३ । १३ ।

बभूवे । अनुबभूवे ।

कर्त्तरि कर्मव्यतिहारे । १ । ३ । १४ ।

क्रियाविनिमये द्योत्ये कर्त्तर्य्यात्मनेपदं स्यात् । व्यतिलुनीते । (उ।२२सू० अन्यस्य योग्यं लवनं २) करोतीत्यर्थः । श्नसोरल्लोपः । व्यतिस्ते । व्यतिषाते । व्यतिषते । तासस्त्योर्लोपः (उ।३सू०) सलोपः । व्यतिसे ३ । धि च (२२सू०) । व्यतिध्वे । ह एति (उ२२सू०) व्यतिहे । व्यत्यसै । व्यत्यास्त । व्यतिषीत । व्यतिरासे । व्यतिभाते । व्यतिबभे ।

न गतिहिंसार्थेभ्यः (४) । १ । ३ । १५ ।

व्यतिगच्छन्ति । व्यतिघ्नन्ति । प्रतिषेधे हसादीनामुपसंख्यानम् । हसादयो हसप्रकाराः शब्दक्रिया । व्यतिहसन्ति । व्यतिजल्पन्ति । हरतेरप्रतिषेधः ॥ सम्प्रहरन्ते राजानः ।

(१) भावे कर्मणि च विहितस्य लकारस्यात्मनेपदं स्यादिति सूत्रार्थः ।

(२) यदन्यस्य न योग्यं तस्य तत्करणं कर्मव्यतिहारः तथाच गृह्यस्य योग्यं शस्यादिलवनं ब्राह्मणः करोतीत्यर्थः परस्परकरणमपि व्यतिहारः सम्प्रहरन्ते राजान इत्यादिप्रयोगात् ।

(३) व्यतिसे इत्यत्र उपसर्गप्रादुर्भ्यामिति (उ२२सू) न षत्वं सकारस्याच्परत्वाभावात् आदेशप्रत्यययोरिति ([illegible]सू०) षत्वमपि न, सात्पदाद्योरिति ([illegible]सू०) निषेधात् [illegible] पदत्वात्

(४) कर्मव्यतिहारे यदात्मनेपदं तस्य निषेधः [illegible] गतिहिंसार्थेभ्यो [illegible] ।

आदाक. । अनु क्रीडते । सं-क्रीडते । परि-क्रीडते । आ क्रीडते । अनोः कर्म्मप्रवचनीयात्व उपसर्गेण समा माइभवति । माणवकमनु क्रीडति तेन सहेत्यर्थः । तृतीयार्थे (प१६४सू०) इत्यनोः कर्म्मप्रवचनीयत्वम् । समाऽक्रूजने । सं-क्रीडन । कूजने नु । स क्रीडति चक्रम् । आगमेः क्षमायाम । एतस्य ईं यहणम् । आ गमयस्व तावत् मा त्वरिष्ठा इत्यर्थः । शिक्षेर्जिज्ञासायाम । धनुषि शिक्षते । धनविषये ज्ञाने शक्ता ६ भवितुमिच्छतीत्यर्थः । आशिषि नाथ । आशिष्येवेति नियमार्थं (७ वार्त्तिकमित्यर्थम् (उ४४सू० । सर्पिषा नाथते सर्पिर्मे स्यादित्याशास्त इत्यर्थ. । कथ "नाथसे किम् पतिव भूभृतामिति" नाथसे इति पाठान । हरतेर्गतताच्छील्ये । गतम्प्रकार. । पैतृकमश्वा अनु हरन्ते मातृकङ्गाव:, पितुर्मातुश्च गतम्प्रकारं सततम्परिशीलयन्तीत्यर्थः । ताच्छील्ये किम् मातुरनु हरति ८) । किरतेर्हर्ष जीविकाकुलायकरणेषु वाच्यम । हर्षादयो विषयाः तत्र हर्षो विक्षेपस्य कारणम इतरे फले ।

## अपाच्चतुष्पाच्छकुनिष्वालेखने । ६।१।१४२ ।

अपात्किरतेः सुट् स्यात् । सुडपि हर्षादिष्वेव वक्तव्य ।

---

(६) शिक्षेर्जिज्ञासायामित्यत्र शिक्ष विद्योपादाने (उ ४ इत्यस्य न ग्रहण तस्यानुदात्तेत्त्वादात्मनेपदसिद्धेः किन्तु शक सामर्थ्ये इति धातोः व्य सदे उत्तु... शक्तो भवितुमिच्छतीति ।

(७) अनुदात्तेत्त्वात्मनेपदसिद्धे नियमार्थमित्यर्थ. अनुदात्तेत्त्वञ्च अनुदात्तेत इकारेति (उ७सू०) नुम् प्रत्ययार्थं तेन नाथन इति सिद्धम् ।

(८) मातरनु-हरतीत्यत्र सादृश्यमात्र विवक्षित न तु प्रकारताच्छील्यम् ।

अप स्किरते वृषो हृष्टः, कुक्कुटो भक्ष्यार्थी, श्वा आश्रयार्थी च। हर्षादिष्विति किम्। अपकिरति कुसुमम्। इह तङ्सुटौ न। हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तथापि सुड-भावे नेष्यत इत्याहुः। मद्रोऽपकिरति (९)। आङि नुप्रच्छ्योः (वा)। आनुते। आपृच्छते। शप उपालम्भे (वा)। आक्रोशार्थात् शपतेः कर्तृगामिनि फले उपदर्शकपक्षे आत्मनेपदं वक्तव्यमित्यर्थः। कृष्णाय शपते।

## समवप्रविभ्यः स्थः। १। ३। २२।

सन्तिष्ठते। स्थाघ्वोरिच्च (१।२।१७)। समस्थित। समस्थिषाताम्। समस्थिषत। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। आङः प्रतिज्ञायामुपसंख्यानम् (वा)। अस्ति त्वमातिष्ठते नित्यत्वेन प्रतिजानीते इत्यर्थः।

## प्रकाशनस्थेयाख्ययोश्च (१०)। १। ३। २३।

गोपी कृष्णाय तिष्ठते आशयम्प्रकाशयतीत्यर्थः। 'संशय्य-कर्णादिषु तिष्ठते यः' कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः।

## उदोऽनूर्ध्वकर्मणि (११)। १। ३। २४।

---

(९) मद्रोऽपकिरतीत्यत्र हर्षे सत्यपि आलेखनाभावान्न सुट् नात्मनेपदमित्यर्थः।

(१०) प्रकाशनं ज्ञापनं स्थेयो विवादपदनिर्णेता 'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिन्युक्तेः।

(११) ऊर्ध्वदेशसंयोगानुकूलं यत्कर्म तदूर्ध्वकर्म तदव्यभिचारीत्यर्थः। स एक-

मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम् । पीठादुत्तिष्ठति । ईहायामेव । नेह ग्रामाच्छतमुत्तिष्ठति ।

उपान्मन्त्रकरणे ।१।३।२५।

आग्नेय्याग्नीध्रमुपतिष्ठते (१२)। मन्त्रकरणे किम् भर्तारमुपतिष्ठति यौवनेन । उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् * । आदित्यमुपतिष्ठते । कथन्तर्हि "स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति" देवतात्वारोपात् नृपस्य देवतांशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते प्राप्नोतीत्यर्थः । वा लिप्सायामिति वक्तव्यम् * । भिक्षुकः प्रभुमुपतिष्ठते उपतिष्ठति वा लिप्सया उपगच्छतीत्यर्थः ।

अकर्म्मकाच्च ।१।३।२६।

उपात्तिष्ठतेरकर्म्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते सन्निहितो भवतीत्यर्थः ।

उद्विभ्यां तपः ।१।३।२७।

---

नुवर्त्तते यद्यपि कर्त्तृस्थस्य प्रयोजनस्य क्रियायां वर्त्तमानादुत्पूर्वात् तिष्ठतेरात्मनेपदं व्याप्तिस्थैर्ये उच्यते तथापि परिच्छिन्नावस्था-बोधनाय कर्मपदमित्याशय इत्याद्यभिप्रेत्य इत्यादिकं वेदा ईहा मा च ग्रामाच्छतमुत्तिष्ठतीत्यादौ नास्तीति न तत् ।

(१२) एवं मन्त्रकरणिका श्रुतिरस्य यजमानादिकर्तृका आग्नेय्या अग्नि-देवताकया ऋचा उपस्थानमित्यर्थः ।

अकर्मकादित्येव। उत्तपते। वि-तपते दीप्यत इत्यर्थः। स्वाङ्गकर्मकाच्चेति (१३) वक्तव्यम्। स्वमङ्गं स्वाङ्गं न त्वद्रवमिति (पृ॰२४५॰) परिभाषितम्। उत्तपते वितपते पाणिम्। नेह। सुवर्णमुत्तपति सन्तापयति वि लापयति वेत्यर्थः। चैत्रो मैत्रस्य पाणिमुत्तपति सन्तापयतीत्यर्थः।

## आङो यमहनः। १। ३। २८।

आ-यच्छते। आ हते। अकर्मकात् स्वाङ्गकर्मकादित्येव। नेह। परस्य शिर आ-हन्ति। कथन्तर्हि "आ-जघ्ने विषमविलोचनस्य वक्षः" इति भारवि. "आ हध्वं मा रघूत्तममिति" भट्टिश्च प्रमाद एवायमिति भागवृत्तिः। प्राप्य (१४ इत्य ध्याहारो वा। ल्यब्लोपे पञ्चमीति (पृ॰८८पृ॰) तु स्ववन्तं विनैव तदर्थावगतिर्यत्र तद्विषयम्। भित्तुमित्यादितुमुन्ताध्याहारो वाम्। समीपमेत्येति वा (१५)।

## आत्मनेपदेष्वन्यतरस्याम्। २। ४। ४४।

हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु। आवधिष्ट। आवधिषाताम्।

## हनः सिच्। १। २। १४।

---

(१३) स्वाङ्गकर्मकाच्चेति चकारेणाकर्मकस्य समुच्चयेन उत्तपते वि-तपते।

(१४) प्राप्येति तथाच हन्तेरकर्मकत्वात् आ-जघ्न इत्यादावात्मनेपदसिद्धिः।

(१५) समीपमेत्येति समीपमेत्य वक्ष आजघ्ने मल्ल इव मल्लोऽभासिवादास्फोटन चकारेत्यर्थः।

कित्त्वात् । अनुनासिकलोपः (७।१।७१ सू०) । आहत । आह
साताम् । आहसत ।

यमो गन्धने । १ । २ । १५ ।

सिच् कित् स्यात् । गन्धनं सूचनं परदोषाविष्करणम् । उदा-
यत । गन्धने किम् उदायंस्त पादम् आकृष्टवानित्यर्थः ।

समो गम्यृच्छिभ्याम् (१६) । १ । ३ । २९ ।

अकर्मकाभ्यामित्येव । सङ्गच्छते ।

वा गमः । १ । २ । १३ ।

गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । सङ्गसीष्ट-
सङ्गंसीष्ट । समगत समगंस्त । समृच्छते । अकर्मकाभ्यां
किम् ग्रामं सङ्गच्छति । विदिप्रच्छिस्वरतीनामुपसंख्यानम् * ।
वित्तेरेव ग्रहणम् । संवित्ते । संविदाते ।

वेत्तेर्विभाषा । ७ । १ । ७ ।

वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात् । संविद्रते-
संविदते । सम्पृच्छते । संस्वरते । अर्तिश्रुदृशिभ्यश्चेति
वक्तव्यम् * । अर्तीति द्वयोर्ग्रहणम् अङ्विधौ त्वियर्तेरेवे-
त्युक्तम् (२८७४ सू०) । मा समृत । मा समृषाताम् । मा समृषतेति ।

---

(१६) समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य इति [illegible]
पाठमनुसरति समो गम्यृच्छिभ्यामिति । [illegible]
[illegible] । तत्त्व०

समार्त । समार्षाताम् । समार्षतेति च भ्वादेः । इयर्तेस्तु मा समरत । मा समरेताम् । मा समरन्त । समारत । समारेताम् । समारन्तेति च । संशृणुते । सम्पश्यते । अकर्मकादित्येव । अतएव "रक्षाभीति पुरापि संशृणुमहे" इति मुरारिप्रयोगः प्रामादिक इत्याहुः । अध्याहार्यं वा इति कथयद्भिरिति । अथाऽस्मिन्नकर्मकाधिकारे वहिगम्यादीनां कथमकर्मकत्वमिति चेत् । शृणु ।

"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥"

वहति भारम् । नदी वहति (१७) स्यन्दत इत्यर्थः । जीवति । नृत्यति । प्रसिद्धिर्यथा । मेघो वर्षति । कर्मणोऽविवक्षातो यथा । 'हिताम्न यः संशृणुते स किं प्रभुः' उपसर्गादस्यत्यूह्योर्वेति वाच्यम् * । अकर्मकादिति निवृत्तम् । बस्त्रनि-रस्यति—निरस्यते । समूहति—समूहते ।

## उपसर्गाद्ध्रस्व ऊहतेः । ७ । ४ । २३ ।

---

(१७) वहते सकर्मकस्य प्रवाहार्थ स्यन्दने वार्त्तिकेऽकर्मकत्वं दर्शयति नदी वहतीति । प्राणधारणं जीवः । गात्रविक्षेपश्च नृत्यं तयोर्द्वयोरपि धात्वर्थप्रविष्टकर्मकत्वादकर्मकत्वम् । प्रसिद्धेश्च सत्ताजागरणादीनां तेषां फलसमानाधिकरणव्यापारबोधकत्वादकर्मकत्वम् । अविवक्षितकर्मत्वे कर्माकाङ्क्षव्यापारबोधकत्वे तथाच फलव्यधिकरणव्यापारबोधकानामपि विवक्षाभावात् फलसामानाधिकरण्येन फलशून्यव्यापारबोधकत्वादकर्मकत्वम् । प्रपञ्चितञ्चैतदस्माभिः मञ्जार्थ-तन्त्रे ।

वादो कश्चिदिति । अस्य समुद्यात् । अर्थिनं समुद्यात् ।

**निसमुपविभ्यो ह्वः । १ । ३ । ३० ।**

नि-ह्वयते ।

**स्पर्द्धायामाङः । १ । ३ । ३१ ।**

कृष्णश्चाणूरमा-ह्वयते । स्पर्द्धायां किम् पुत्रमा-ह्वयति ।

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । १ । ३ । ३२ ।**

गन्धनं हिंसा (१७) । उत्-कुरुते सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव । अवक्षेपणं भर्त्सनम् । श्येनो वर्त्तिकामुदा-कुरुते भर्त्सयतीत्यर्थः । हरिमुप-कुरुते सेवते । परदारान् प्र-कुरुते तेषु सहसा (१८) प्र-वर्त्तते इत्यर्थः । एधोदकस्योपस्-कुरुते गुणमाधत्ते । गाथाः प्र-कुरुते प्रकथयतीत्यर्थः । शतम्प्र-कुरुते धर्मार्थं विनियुङ्क्ते । एषु किम् कटङ्करोति ।

**अधेः प्रसहने । १ । ३ । ३३ ।**

प्रसहनं क्षमाभिभवश्च षह मर्षणेऽभिभवे चेति पाठात् । शत्रुमधि-कुरुते क्षमते इत्यर्थः अभि-भवतीति वा ।

१७ गन्ध अर्दने इति चु॰ आ॰ । चौरादिकस्य गन्धधातोरनेनानुकरणादेव गन्धनं हिंसेति ।

१८ सहसा इति साहसिकस्य कर्म साहसिक्यं तथात्र सहसा प्रवृत्ति-विवक्षितत्वादाह तेषु सहसा प्रवर्त्तते इति ।

**वेः शब्दकर्मणः। १। ३। ३४।**

स्वरान् वि-कुरुते उच्चारयतीत्यर्थः। शब्दकर्मणः किम्? चित्तं विकरोति कामः।

**अकर्मकाच्च। १। ३। ३५।**

वेः कृञ इत्येव। छात्रा वि कुर्वते विकारं लभन्ते।

**सम्माननोत्सञ्जनाचार्य्यकरणज्ञानभृतिविगणनव्ययेषु नियः। १। ३। ३६।**

सम्मानोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः इतरे प्रयोगोपाधयः। तथाहि शास्त्रे नयते शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन च शिष्यसम्माननं फलितम्। उत्सञ्जने। दण्डमुन्नयते उत्-क्षिपतीत्यर्थः। माणवकमुप-नयते विधिना आत्मसमीपम्प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्य्यत्वं क्रियते (२०)। ज्ञाने। तत्त्वं नयते निश्चिनोतीत्यर्थः। कर्म्मकरानुप-नयते भृतिदानेन स्वसमीपम्प्रापयतीत्यर्थः। विगणनमृणादेर्निर्य्यातनम्। करं वि नयते राज्ञे देयं भागम्परि-शोधयतीत्यर्थः। शतं वि-नयते धर्म्मार्थं वि-नि युङ्क्त इत्यर्थः।

---

(२०) उपनयो वेदाध्ययनप्रयोजकसंस्कारस्तस्य परमार्थित्वात् परस्मैपदे प्राप्ते-ऽनेन तङ् विधीयते न तूपनयनमात्रेणाचार्य्यत्वं किन्तु तत्पूर्वकाध्यापनेन "उपनीय ददद् वेदमाचार्य्यः स उदाहृत" इति स्मृतेरेवञ्चाचार्य्यकरणस्य प्रयोगोपाधित्वं परम्परया बोध्यम्।

## कर्तृस्थे चाशरीरे कर्मणि । १ । ३ । ३७ ।

नियः कर्तृस्थे कर्मणि (२१) यदात्मनेपदमाप्नोति तच्छरीरावयवभिन्ने एव स्यात् । सूत्रे शरीरशब्देन तदवयवो लक्ष्यते । क्रोधं विनयते अप-गमयति । तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात् स्वरितञितः (२५१०) इत्येव सिद्धे नियमार्थमिदम् । तेनेह न । गण्डं विनयति (२२) । कथं तर्हि "विगणय्य नयन्ति पौरुषमिति" कर्तृगामित्वाविवक्षाया भविष्यति ।

## वृत्तिसर्गतायनेषु क्रमः । १ । ३ । ३८ ।

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिर्न प्रतिहन्यत इत्यर्थः । सर्ग उत्साहः । अध्ययनाय क्रमते उत्सहते । क्रमन्तेऽस्मिन् शास्त्राणि स्फीतानि भवन्तीत्यर्थः ।

## उपपराभ्याम् । १ । ३ । ३९ ।

वृत्त्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात् । उप क्रमते । परा क्रमते । नेह । सं क्रामति ।

## आङ उद्गमने । १ । ३ । ४० ।

आ क्रमते सूर्यः उदयत इत्यर्थः । ज्योतिरुद्गमन इति वाच्यम् (४) । नेह । आ-क्रामति धूमो हर्म्यतलात् ।

---

(२१) कर्तृस्थे कर्मणि कर्तृस्थे क्रियाफले इत्यर्थः अप्रदर्शितदृष्टान्तात् कर्मणोऽपि फलाभावात् फलवत्त्वेन कर्तृत्व कर्माभावात् कर्तृगामि फलमात्रस्य अवयवे कर्मणि सतीति व्याख्येयम् ।

(२२) गण्डो रोगविशेषस्तस्य कर्तृस्थत्वेऽपि शरीरावयवत्वात् न तङ्, तर्हीति बोध्यम् ।

वेः पादविहरणे। १। ३। ४१।

साधु विक्रमते वाजी। पादविहरणे किम् वि-क्रामति सन्धि र्द्विधा भवति स्फुटतीत्यर्थः।

प्रोपाभ्यां समर्थाभ्याम्। १। ३। ४२।

समर्थ तुल्यार्थौ शकन्ध्वादित्वात् (५४ २१) पररूपम्। प्रारम्भेऽनयोस्तुल्यार्थता। प्र-क्रमते। उप-क्रमते। समर्थाभ्यां किम् प्र-क्रामति गच्छतीत्यर्थः। उप क्रामति (२३) आगच्छतीत्यर्थः।

अनुपसर्गाद्वा। १। ३। ४३।

क्रामति—क्रमते। अप्राप्तविभाषेयम्। वृत्त्यादौ तु नित्यमेव।

अपह्नवे ज्ञः। १। ३। ४४।

शतमप जानीते अप लपतीत्यर्थः।

अकर्मकाच्च (२४)। १। ३। ४५।

सर्पिषोऽनु-जानीते सर्पिषा उपायेन प्र-वर्त्तत इत्यर्थः।

सम्प्रतिभ्यामनाध्याने। १। ३। ४६।

शतं सञ्जानीते अवेक्षत इत्यर्थः। शतं प्रति-जानीते अङ्गीकरोतीत्यर्थः। अनाध्यान इति योगो विभज्यते। तत्सा-

---

(२३) इत्यादिष्वर्थेषु प्रोपाभ्यामित्यस्य प्रवृत्तेरभावात् तदर्थत्वाभाव तत्।

(२४) अनुपसर्गाज्ज्ञ (प्२६५१०) इत्यनेनैव सिद्धे सर्पिषोऽनु-जानीते इति सोपसर्गार्थमिदम्।

अर्थादकर्मकाच्चेति प्राप्तिरपि वार्य्यते। मातरं मातुर्वा सञ्जानाति। कर्म्मणः शेषत्वविवक्षायां षष्ठी।

भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः। १। ३। ४७।

उपसम्भाषोपमन्त्रणे धात्वर्थौ इतरे प्रयोगोपाधयः। शास्त्रे वदते भासमानो ब्रवीतीत्यर्थः। उपसम्भाषोपसान्त्वनम्। भृत्यानुप-वदते सान्त्वयतीत्यर्थः। ज्ञाने। शास्त्रे वदते। यत्ने। क्षेत्रे वदते। विमतौ। क्षेत्रे विवदन्ते। उपमन्त्रणमुपच्छन्दनम। उप वदते प्रार्थयतइत्यर्थः।

व्यक्तवाचां समुच्चारणे। १। ३। ४८।

मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात्। सम्प्र-वदन्ते ब्राह्मणाः। नेह सम्प्र-वदन्ति खगाः।

अनोरकर्मकात्। १। ३। ४९।

व्यक्तवाग्विषयादनुपूर्वादकर्म्मकाद्वदेरात्मनेपदं स्यात्। अनु-वदते (२५) कठः कलापस्य। अकर्म्मकात्किम् उक्तमनु-वदति। व्यक्तवाचां किम् अनु-वदति वीणा।

विभाषा विप्रलापे। १। ३। ५०।

विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात्। वि-प्र वदन्ते वि प्र वदन्ति वा वैद्याः।

---

(२५) अनु पाठकं तेन कलापस्येति तुल्यार्थैर्योगेऽपि शेषविवक्षया षष्ठी।

### अवाद्ग्रः। १। ३। ५१।

अव गिरते। गृणातिस्त्ववपूर्वो न प्र-युज्यत एवेति भाष्यम्।

### समः प्रतिज्ञाने। १। ३। ५२।

शब्दं नित्यं सङ्गिरते प्रति जानीत इत्यर्थः। प्रतिज्ञाने किम् सङ्गिरति ग्रासम्।

### उदश्चरः सकर्मकात्। १। ३। ५३।

धर्ममुच्चरते उल्लङ्घ्य गच्छतीत्यर्थः। सकर्मकात्किम् वाष्प उच्चरति उपरिष्टाद्गच्छतीत्यर्थः।

### समस्तृतीयायुक्तात्। १। ३। ५४।

रथेन सञ्चरते।

### दाणश्च सा चेच्चतुर्थ्यर्थे। १। ३। ५५।

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतु-र्थ्यर्थे। दास्या सं-यच्छते। पूर्वसूत्रे सम इति षष्ठी तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्त्तते। रथेन समुदा-चरते। दास्या सम्प्र यच्छते।

### उपाद्यमः स्वकरणे। १। ३। ५६।

स्वकरणं स्वीकारः। (२६) भार्य्यामुप-यच्छते।

---

(२६) स्वकरणमित्यत्र विकल्पेन चिह्नं भवति समर्थानां प्रथमाद्वेत्यतो (पृ४८८पृ०) वेत्यनुवृत्तेः। स्वीकारश्च भार्य्यास्वीकारोऽन्यस्वीकारो वेत्यत्र नापक्लेन "शस्त्राण्युपायंस्त जितरावीति" भट्टिः सङ्गच्छते।

### विभाषोपयमने । १ । ३ । । ५६ ।

यमः सिच् किद्वा स्यादिववाहे। रामः सीतामुपायत उपायंस्त वा उदवोढेत्यर्थः। गन्धनाङ्गे (२७) उपयमि तु पूर्वविप्रतिषेधान्नित्यङ्कित्त्वम् (२८)।

### ज्ञाश्रुस्मृदृशां सनः । १ । ३ । ५७ ।

सनन्तानामेषां (२९) प्राग्वत्। धर्म्मं जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

### नानोर्ज्ञः । १ । ३ । ५८ ।

पुत्रमनु-जिज्ञासति। पूर्वसूत्रस्यैवायं निषेधः 'अनन्तरस्ये'ति न्यायात्। तेनेह न। सर्पिषोऽनुजिज्ञासते सर्पिषा प्रवर्त्तितुमिच्छतीत्यर्थः। पूर्ववत् सनः (उ० ५५ सू०) इति तङ्। 'अकर्म्मकाच्चे'ति (उ० ५ सू०) केवलाद्विधानात्।

### प्रत्याङ्भ्यां श्रुवः । १ । ३ । ५९ ।

आभ्यां सनन्ताच्छ्रुव उक्तवन्न स्यात्। प्रति-शुश्रूषति। आशु-

(२७) गन्धनेति (उ० सू०) सूत्रभाष्ये पूर्वप्रतिषेधस्योदाहरणाय [illegible] गन्धनाङ्गे इति सूत्रार्थे द्रष्टव्यम्।

(२८) यमो गन्धने इति (उ० ४६ सू०) पूर्वसूत्रं [illegible]।

(२९) अपह्नवे ज्ञ इति (उ० ५ सू०) ज्ञाधातोरपि [illegible] मि (उ० ५६ सू० वा०) [illegible] विधानात् तङ् [illegible] पूर्ववत्सन (उ० ५५ सू०) इत्यनेन [illegible] [illegible] तङ् [illegible] तङ् विधानार्थमिदम्।

श्रूषति।। कर्मप्रवचनीयात्त्वान्नेह। देवदत्तं प्रति शुश्रूषते। शदेः शितः (उ८०पृ०) म्रियतेर्लुङ्लिङोश्च (उ१५४पृ०) (२०) व्याख्यातम्।

## पूर्ववत्सनः। १। ३। ६२।

सनः पूर्वो यो धातुस्तेन तुल्यं सनन्तादप्यात्मनेपदं स्यात्। एदिधिषते। शिशयिषते। निविविक्षते। पूर्ववत्किम्। बुभूषति। शदेरित्यादिसूत्रविषये सनो (२१) नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेनेह न। शिशत्सति। मुमूर्षति। आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य (उ७२पृ०) एधाञ्चक्रे।

## प्रोपाभ्यां युजेरयज्ञपात्रेषु। १। ३। ६४।

प्रयुङ्क्ते। उपयुङ्क्ते। स्वराद्यन्तोपसर्गादिति (२२) वक्तव्यम्। उद्युङ्क्ते। नियुङ्क्ते। अयज्ञपात्रेषु किम्। द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति।

## समः क्ष्णुवः। १। ३। ६५।

संक्ष्णुते शस्त्रम् (२३)।

---

(२०) भ्वादौ शदधातुस्तुदादौ च म्रधातुरुक्तस्तत्र ते सूत्रे व्याख्याते।

(२१) सनो नेति न सूत्रं किन्तु नानोर्ज्ञ इत्यतो (उ७५४पृ०) नेति पूर्ववत्सन इत्यतः सन इत्यनुवर्त्य योगविभागात् सनो नेत्यन्वयात्तद-र्थक भाष्यवाक्यम्।

(२२) स्वरवर्ण एवाद्यन्तयोर्यस्य तस्मादुपसर्गादित्यर्थस्तेन दुर्निर्भ्यां समस्य नेति बोध्यम्।

(२३) समगच्छीत्यत्र (उ२४६पृ०) क्ष्णुधातुमपठित्वा पृथक्सूत्रकरणं अ-कर्मकादपि तद्विधानार्थमिति ध्वनयन्नुदाहरति संक्ष्णुते शस्त्रमिति।

**भुजोऽनवने (२४)। १। ३। ६६।**

ओदनं भुङ्क्ते अभ्यवहरतीत्यर्थः। "बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्"। "वृद्धो जनो दुःखशतानि भुङ्क्ते"। इहोपभोगो भुजेरर्थः। अनवने किम् महीं भुनक्ति।

**णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने। १। ३। ६७।**

ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्यतेऽणौ यत्कर्म कारकं स चेण्णौ कर्त्ता स्यात् अनाध्याने (२५)। णिचश्चेति (उ७०पृ०) सिद्धेऽकर्त्रभिप्रायार्थमिदम्। कर्त्रभिप्राये तु विभाषोपपदेनेति (७१०पृ०) विकल्पे, (२६) ऽणावकर्मकादिति (७२४पृ० परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते (२७) कर्तृस्थ-

---

(२४) अवन पालनम् अत्र अदन इति बहवः। अनवने इति पर्युदासपक्षं भुजेरौधादिकत्वं च पक्षार्थं तथा च कारणमिति [illegible] उपभोगाद्यर्थ इति तदर्थं भिद तदेतदुदाहरणे अवयव आरोपचार।

(२५) इह शास्त्रान्तरवाक्यानि चत्वारि णेरात्मनेपदमित्येकं, तत्र णादिमन्ते-नान्वितम अणौ यत् कर्म णौ चेदिति द्वितीय, तत्र कर्मशब्दः क्रियापर "कर्म क्रियेति" कोषात् तथाचाणौ या क्रिया सैव चेत् ण्यन्तेनोच्यत इत्यर्थ, स कर्त्तेति तृतीयं अणौ यत् कर्म णौ चेदिति सर्वमत्रानुवर्त्तते कर्मणाकारकं कारकविशेषपर इत्यनेन आवृत्ते-रर्थ, यत् कर्म स्यादि। अनाध्याने इति चतुर्थ, आवृत्ते अनिति आध्यानमुत्कण्ठापूर्वक स्मरणम्।

(२६) विकल्पे इति परत्वात् प्राप्तं इत्युत्तरेण सम्बन्ध।

(२७) इदमेवेष्यत इति। अत्र अत्र युज्यते यतते उच्यते विभाषोपपदेने-त्यस्य (७१०पृ०) विषय। इत्थं सति णावकर्मकादिति परस्मैपदविधानस्य [illegible]।

भावकाः (३८) कर्तृस्थक्रियायोदाहरणम्। तथाहि पश्यन्ति (३९) भवभीताः चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। प्रेरणांशत्यागे (४०) पश्यति भवः विषयो भवतीत्यर्थः। ततो (४१) हेतुमण्णिच्। दर्शयन्ति भवभक्ताः पश्यन्तीत्यर्थः। पुनस्तदंशस्य (४२) विवक्षायाम्। दर्शयते भवः। इह प्रथमाद्वितीययोरवस्थयोर्द्वितीयाचतुर्थ्योश्च तुल्योऽर्थे (४३ तत्र तृतीयक

---

गोते तन्त्रकं गोपी गाययतीत्यादौ अणावकर्मकादित्यत्र (उ० ६४पृ०) विवक्षः कारयति केदारः स्वयमेवेति णेरणाविव्यत्र (उ० ६६पृ०) द्रष्टव्य। तत्र हि लूयते केदारः स्वयमेवेति द्वितीयकक्षायामकर्मकमिति भावः।

(३८) अपरिस्पन्दनसाध्यो धात्वर्थो भावः सपरिस्पन्दनसाध्या तु क्रिया। साधनञ्च कारकं तत्र गमनारोहणादौ सपरिस्पन्द एव कर्ता क्रियां साधयति अवलोकनादिकं तु स्पन्दनरहितेनापीत्यनयोर्भेदात् कर्तृस्थभावका इत्यादि।

(३९) कर्तृस्थभावकमुदाहरति पश्यन्तीति स्पन्दनं विनापि चाक्षुषदर्शनादेः साध्यत्वात्तथात्वम्।

(४०) प्रेरणांशेति कर्मणः सौकर्यविवक्षया तदीयव्यापारमात्रस्यैव वाच्यत्वे इत्यर्थः।

(४१) तत त्यक्तप्रेरणांशाद्धातोरित्यर्थः।

(४२) पुनस्तदंशस्येति उपायनिवृत्तावपि उपेयानिवृत्तिरिति न्यायात् णिचो न निवृत्तिरिति द्योतनाय पुनस्तदंशस्येत्युक्तम् एवञ्च स्थित एव णिजिति फलितार्थः।

(४३) तुल्योऽर्थ इति प्रथमाद्वितीययोश्चाक्षुषज्ञानानुकूलव्यापारबोधकत्वाविशेषात् तृतीयचतुर्थ्योस्तु चाक्षुषज्ञानरूपफलमात्रबोधकत्वाविशेषात् तुल्यत्वम्।

मत्यक्रतिभ्याश्च उपान्तयोहं ग्रोऽपि प्रे चक्षोभ्यामी दर्शयति भा रोहयते इत्युदाहरणम् अर्थः प्राग्वत् । अस्मिन् पक्षे द्वितीयकक्षायाञ्च तङ् समानक्रियात्वाभावाचिनर्थकत्वादिति । ... अनाध्याने किम् स्मरति वनगुल्मं कोकिलः । स्मरयति वनगुल्मः उत्कण्ठापूर्वकस्मृतो विषयो भवतीत्यर्थः । भीस्म्योर्हेतुभये (३।८४।०) व्याख्यातम् ।

## गृधिवञ्च्योः प्रलम्भने ।१।३।६९।

प्रतारणेऽर्थे आभ्यामाभ्यामाभ्याम् । माणवकं गर्धयते वञ्चयते वा । प्रलम्भने किम् श्वानङ्गर्धयति अभिकाङ्क्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति वर्जयतीत्यर्थः । लिय: सम्माननशालीनीकरणयोश्च (३।८४।) व्याख्यातम् ।

## मिथ्योपपदात् कृञोऽभ्यासे । १ ।३। ७१।

णेरित्येव (५२) । पदम्मिथ्या कारयते स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्योपपदात्किम् पदं सुष्ठु कारयति । अभ्यासे किम् सकृत्पदम्मिथ्या कारयति । स्वरितञितः कर्त्रभिप्राये क्रियाफले (३५४०) यजते । सुनुते । कर्त्रभिप्राये किम् ऋत्विजो यजन्ति (५३) । सुन्वन्ति ।

---

(५२) इह करोतिरुच्चारणार्थत्वादकर्मकः । तत्र ण्यन्तस्य निःसरणं ... तदुच्चारणं निःसारणं तत्र ... अकर्मकमुच्चारयति निःसारयतीत्यर्थः ... अकर्मकात् ... धातोर्णिचा तत्र आत्मनेपदं द्योतकम् ।

(५३) इविधानेऽनादिष्ट ... न ... कर्तृगामी फलतीति ... अतो ... न तङ्

स्वरितञित इत्यादि (७५४०) पञ्चसूत्र्या यदात्मनेपदं विहित-मतत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। एवं (५७) यज्ञं यजति यजते वा। एवं कटं करोति कुरुते वा। एवम् अप वदति अप वदते वा। एवं यज्ञं कारयति कारयते वा। एवं व्रीहिं सं-यच्छति सं यच्छते वा। एवं ज्ञा-जानाति जानीते वा।

इत्यात्मनेपदम्।

---

भिन्नद्योतनात् एतेन प्रकृतस्यसमर्थनार्थं स्वरितञितः कर्त्रभि-प्राये क्रियाफले इति (७५५०) सूत्रे ऽभिप्रायपदस्य इच्छापरतया व्याख्यानेन कर्तृगामित्वेन विवक्षाविवक्षाभ्यां पदव्यवस्थेति वदन् कश्चिन्ना-पास्तः परास्तः। किञ्च मिच्छत्यर्थकाम इति ग्रन्थेन मूत्वा परगा-मिफलस्यै वोद्देश्यतावोधनात्तयासमर्थनमपि अकिञ्चित्करम्। तत्सूत्रं प्रायिकमित्यादिग्रन्थक्रमप्राधिकोक्तिरपि साङ्गिकोव पदव्यव-स्थापकसूत्रस्यैव प्रायिकत्वकल्पनेऽव्यवस्थापत्तेरतोऽनेनैव सूत्रेण परगामिन्यपि फले उपपदेन द्योतिते विभाषेति नवीनपद्धतिराद-रणीया।

(५७) समित्युपकरणं स्वार्थमात्मार्थं वा यजते इत्याद्यपि पाठ्यम्।

शेषात् (१) कर्त्तरि परस्मैपदम् (७५पृ०)। अत्ति ।

## अनुपराभ्यां कृञः ।१।३।७९।

कर्त्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम्। अनु करोति परा करोति। कर्त्तरीत्येव भावकर्मणोर्मा भूत्। नचैवमपि कर्मकर्त्तरि प्रसङ्गः कार्य्यातिदेशपक्षस्य मुख्यतया तत्र कर्मवत् कर्मणा (७७४पृ०) इत्यात्मनेपदेन परेणास्य (२) बाधात्। शास्त्रातिदेशपक्षे (३) तु कर्त्तरि शप् (७७पृ०) इत्यतः शेषादित्यतश्च (७५पृ०) कर्त्तृग्रहणद्वयमनुवर्त्य कर्त्तैव यः कर्त्ता न तु कर्मकर्त्ता तत्रेति व्याख्येयम्।

## अभिप्रत्यतिभ्यः क्षिपः ।१।३।८०।

क्षिप प्रेरणे स्वरितेत् (४)। अभि-क्षिपति।

## प्राद्वहः ।१।३।८१।

प्र-वहति।

---

(१) अनुदात्तङित (७४पृ०) इत्या इत्यात्मनेपदमेवेति नियमात् न [illegible] परस्मैपदस्य [illegible] तथा च कर्त्तरि परस्मैपदं [illegible] विधायकत्वे शेषादिति पदं व्यर्थम्।

(२) अत्र अनुपराभ्यामिति सूत्रविहितपरस्मैपदं। [illegible] कर्मवत् कर्मणेति सूत्रे (पृ०७४पृ०) कार्य्यातिदेशोऽयमिति वक्ष्यति।

(३) शास्त्रातिदेशपक्षे कर्मवत् कर्मणेत्यनेनात्मनेपदं न विधीयते किन्तु भावकर्मणोरिति (पृ०४०पृ०) शास्त्रमतिदिश्यते तच्च पूर्वत्वात् परेण अनुपराभ्यामित्यनेन बाध्यताम् [illegible] शास्त्राति-देशेति।

(४) स्वरितेत्त्वादुभयपदित्वे कर्त्तृगेऽपि फले परस्मैपदार्थमारम्भः।

परेर्मृषः (५) ।१।३।८२।

परि मृष्यति। भौवादिकस्य तु। परि-मर्षति। इह परेरिति योगं विभज्य वहेरपीति केचित्।

व्याङ्परिभ्यो रमः।१।३।८३।

वि रमति।

उपाच्च।१।३।८४।

यज्ञदत्तमुप-रमति उपरमयतीत्यर्थः अन्तर्भावितण्यर्थोऽयम्।

विभाषाऽकर्मकात्।१।३।८५।

उपाद्रमेरकर्मकात्परस्मैपदं वा। उप-रमति उप-रमते वा निवर्त्तत इत्यर्थः।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः।१।३।८६।

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। णिचश्च (उ॰७०सू॰) इत्यस्यापवादः। बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। अध्यापयति। प्रावयति प्रापयतीत्यर्थः। द्रावयति विलापयतीत्यर्थः। स्रावयति स्यन्दयतीत्यर्थः (२)।

निगरणचलनार्थेभ्यश्च।१।३।८७।

---

(१) स्वरितेत्यादुभयपदे प्राप्तेऽयमारम्भः कर्तृगे फले परस्मैपदार्थः।

(२) प्रुद्रुस्रुवां चलनार्थत्वेनोत्तरसूत्रेणैव पदत्वे सिद्धेऽत्र सूत्रे पुनर्ग्रह-णमर्थान्तरार्थं तद्द्योतनाय विवृणोति प्रापयतीति, विलापयतीति, स्यन्दयतीति च।

अकर्त्रभिप्राये णेरादिति (३।१९।) परस्मैपदं स्यादेव। यथा, पाययति पयः। "दमयन्ती कमनीयता मदम्"। भिक्षा वासयति। वा क्यषः (३।१८सू०)। लोहितायति लोहितायते। द्युद्भ्यो लुङि (३।७१सू०)। अद्युतत्—अद्योतिष्ट। वृद्भ्यः स्यसनोः (३।७२।)। वर्त्स्यति। वर्त्तिष्यते। विवृत्सति। विवर्त्तिषते। लुटि च क्लृपः (३।८०सू०)। कल्प्ता। कल्प्तासि। कल्पितासे। कल्प्स्यति। कल्पिष्यते—कल्प्स्यते चिक्लृप्सति चिकल्पिषते—चिक्लृप्सते।

इति परस्मैपदप्रक्रिया।

समाप्ता पदव्यवस्था।

लिङ्सिचोरिति (उ०४१४सू०) विकल्पादिडभावे उश्चेति (उ०८१३सू०) कित्त्वं रपरत्वं हलि चेति (उ०७६सू०) दीर्घः । इणः षीध्वमिति (उ०३६सू०) नित्यं ढत्वम् । अगीढ्वम् । उत्तमानां द्वित्वविकल्पे षष्टी (११) उत्तमपुरुषस्या सह मङ्गलेन उक्ता मनस्येति ।

"इड्दीर्घयोर्विकल्पाच्च सत्वं ढत्वं द्वित्वविकल्पतः ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम्" ॥

हेतुमण्ण्यन्तात्कर्मणि लः यक् णिलोपः । शम्यते मोहो मुकुन्देन ।

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ६ । ४ । ९३ ।

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् । प्रकृतो (१२) मितां ह्रस्व एव (उ०७४सू०) तु न विकल्पितः, एवन्तावपि ह्रस्वविकल्पाभिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घ (१३) सिध्यति ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । भाष्ये तु पूर्वत्रासिद्धे न (१४) स्थानिवदित्यव-

---

विभाषेट इत्यनेन (उ०६५सू०) पक्षे ढत्वे द्वादश द्वादशानां मध्ये अनचि चेति (पू०२२सू०) पक्षे ढस्य पक्षे धस्य च द्वित्वे द्विगुणिते चतुर्विं-शतिः, मय इति (पू०२६सू०) पञ्चीनिपक्षे यकारस्यापि द्वित्वे अष्टचत्वारिं-शत् अनचि चेति (पू०२२सू०) मकारस्य द्वित्वे षण्णवतिरित्यर्थः ।

(११) अचोरहाभ्यामिति (पू०२८सू०) वस्य द्वित्वे द्वयोरपि वस्य यणोमय (२६सू०) इति द्वित्वे चत्वारि, चतुर्णामपि मस्य अनचि चेति (२२सू०) द्वित्वे अष्टावित्यर्थः ।

(१२) जनीजृषेत्यादिना (उ०८५सू०) मित्संज्ञकानां यो ह्रस्वः प्रक्रान्त इत्यर्थः ।

(१३) णिलोपस्य स्थानिवत्त्वाभावे व्यवधानादिति भावः ।

(१४) न पदान्तेति (२५सू०) सूत्रेण स्थानिवत्त्वनिषेधादित्यर्थः ।

**विभाषा चिण्णमुलोः ७।१।६९।**

लभेर्नुमागमो वा स्यात्। अलम्भि अलाभि। व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम्। प्रालम्भि। द्विकर्मकाणां तु

"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया।
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः"।

गौर्दुह्यते पयः। अजा ग्राममनीयते—ह्रियते—कृष्यते—उह्यते। बोध्यते माणवकन्धर्मं, माणवको धर्ममिति वा। भोज्यते, माणवकमोदनः, माणवकओदनं वा। देवदत्तो ग्रामङ्गम्यते। अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते। मासो मासं वा आस्यते देवदत्तेन। णिजन्तात्तु प्रयोज्ये प्रत्ययः। मासमास्यते माणवकः।

इति भावकर्मतिङ्प्रक्रिया।

---

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते स्वव्यापारे स्वतन्त्र-त्वात् । तेन पूर्वं करणत्वादिसत्त्वेऽपि सम्प्रति कर्तृत्वात्कर्तरि लकारः । साध्वसिश्छिनत्ति । काष्ठानि पचन्ति । स्थाली पचति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकास्तेभ्यो भावे कर्तरि च लकाराः । पच्यते ओदनेन । भिद्यते काष्ठेन । कर्तरि तु (१) ।

## कर्मवत्कर्मणा तुल्यक्रियः । ३ । १ । ८७ ।

कर्मस्थया (२) क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । कर्तुरभिहितत्वात्प्रथमा । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । ननु भावे लकारे कर्तुस्तृतीया स्याद-तिदेशादिति चेन्न । लकारवाच्य एव कर्ता कर्मवत् ।

---

[illegible]

[illegible]

(१) [illegible]

(२) [illegible]

कर्त्ता कर्मवत्स्यात् । विध्यर्थमिदम् । एवकारस्तु व्यर्थ इति [illegible] । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । तपोऽनुतापे चेति (३।१।६५) चिण्निषेधात्सिच् । अतप्त । तपःकर्मकस्येति किम् । उत्तपति सुवर्णं सुवर्णकारः । न दुहस्नुनमां यक्चिणौ (३।१।८९) । प्रस्नुते । प्रास्नाविष्ट — प्रास्नोष्ट । नमते दण्डः । अनंस्त । अन्तर्भावितण्यर्थोऽत्र नमिः । यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् (वा) । कारयते । अचीकरत । उच्छ्राययते दण्डः । उदशिश्रियत । चिण्वदिट् तु स्यादेव । कारिष्यते । उच्छ्रायिष्यते । ब्रूते कथा । अवोचत । भारद्वाजीयाः पठन्ति णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् (वा) । पुच्छमुदस्यति उत्पुच्छयते गौः । अन्तर्भावितण्यर्थतायाम् उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायाम् । उत्पुच्छयते गौः । उदपुपुच्छत । यक्चिणोः प्रतिषेधाच्छपचङौ । श्रन्थिग्रन्थ्योराधृषीयत्वात् (…) णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थं देवदत्तः । ग्रन्थते । अग्रन्थिष्ट । ग्रन्थति ग्रन्थम् । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । क्र्यादिकयोस्तु (३।१।८९) ग्रथ्नीते । श्रथ्नीते । स्वयमेव विकुर्वते सैन्धवा वल्गन्तीत्यर्थः । वेः शब्दकर्मणः, अकर्मकाच्चेति (१।३।३५) तङ् । अन्तर्भावितण्यर्थस्य पुनः प्रयोगात् विकुर्वते सैन्धवाः । व्यकारिष्ट । व्यकारिषाताम् । व्यकारिषत । व्यकृत । व्यकृषाताम् । व्यकृषत ।

## कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च ।३।१।९०।

अनयोः कर्मकर्तरि न यक् किन्तु श्यन् परस्मैपदञ्च ।

आत्मनेपदापवादः। कुप्यति कुप्यते पादः। रज्यति रज्यते वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः। कोपिषीष्ट (१३)। रङ्क्षीष्ट।

इति कर्मकर्तृलिङ्प्रक्रिया

---

(१३) यगभावविषयेऽपि परस्मैपदं यगभावे न प्रवर्त्तते इत्यात्मनेपदमेवो-दाहरति कोपिषीष्टेति।

## अभिज्ञावचने लृट् ।३।२।११२।

स्मृतिबोधिन्युपपदे (१) भूतानद्यतने धातोर्लृट् स्यात् । लङो-ऽपवादः । स्मरसि कृष्ण । गोकुले वत्स्यामः (२) । एवं बुध्यसे चेतयसे इत्यादियोगेऽपि तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात् ।

## न यदि ।३।२।११३।

यद्योगे उक्तं न । अभिजानासि कृष्ण । यद्वने अभुञ्ज्महि(३) ।

## विभाषा साकाङ्क्षे ।३।२।११४।

उक्तविषये लृड्वा स्यात् लक्ष्यलक्षणभावेन साकाङ्क्षत्वे । स्मरसि कृष्ण । वने वत्स्यामस्तत्र गाश्चारयिष्यामः । वासो (४) लक्षणं चारणं लक्ष्यम् । पक्षे लङ् । यच्छब्दयोगेऽपि "न यदीति" बाधित्वा परत्वाद्विकल्पः । परोक्षे लिट् [illegible] ।

---

(१) [illegible]

(२) [illegible]

(३) [illegible]

(४) [illegible]

चकार । सुप्तमुग्धे चित्तविक्षेपादिना पारोक्ष्यम् । "सुप्तोऽहं किल विललाप" । "बहु जगद् पुरस्तात्तस्य मत्ता किलाहम्" । अत्यन्तापह्नवे (५) लिड्वक्तव्यः । कलिङ्गेषु स्थितोऽसि: । नाहं कलिङ्गान् जगाम ।

## हशश्वतोर्लङ् च । ३ । २ । ११६ ।

अनयोरुपपदयोर्लिड्विषये लङ् स्यात् । चाल्लिट् । इति ह अकरोत् चकार वा । शश्वदकरोत् चकार वा ।

## प्रश्ने चासन्नकाले (६) । ३ । २ । ११७ ।

प्रष्टव्यः प्रश्नः । आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः । अगच्छत् किम् ? । जगाम किम् ? । अनासन्ने तु । कंसं जघान किम् ? ।

---

(५) अपह्नवोऽपलापस्तस्यात्यन्तिकत्वं तद्धेतोरपह्नवे भवति । नाहं कलिङ्गानित्यादौ वाक्यहेतौ कलिङ्गगमनस्यापह्नवादात्यन्तिकत्वं बोध्यम् । कलिङ्गो नाम देशो गन्तुं निषिद्धः

"अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।

तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हतीति" स्मृतेः

तस्मिन् देशे त्वया गत्वा किं स्थितमिति केनचिदभियुक्तः स आह नाहं कलिङ्गानित्यादि । यदा तु कलिङ्गेषु अगाः इत्युक्ते गमनमेवापलपति तदा नात्यन्तिकापह्नव इति तत्र नाहं न कलिङ्गेषु अगच्छमिति ।

(६) प्रश्ने इति कर्मणि घञ् । भूतानद्यतने परोक्षे इत्यनुवर्त्तते तदाह लिड्विषये इति आसन्नकालश्च पञ्चवर्षाभ्यन्तरः तदतीतः काल. विप्रकृष्ट इति भेदः । तत्त्व० ।

## लट् स्मे ।३।२।११८।

लिटोऽपवादः । यजति स्म युधिष्ठिरः ।

## अपरोक्षे च ।३।२।११९।

भूतानद्यतने लट् स्यात् स्मयोगे । एवं स्म पिता ब्रवीति ।

## ननौ पृष्टप्रतिवचने(७) ।३।२।१२०।

अनद्यतनग्रहणं निवृत्तम् । भूते लट् स्यात् । अकार्षीः किम्? ननु करोमि भोः ।

## नन्वोर्विभाषा (८) ।३।२।१२१।

अकार्षीः किम्? न करोमि नाकार्षम् । अहं नु करोमि अहं न्वकार्षम् ।

## पुरि लुङ् चास्मे ।३।२।१२२।

अनद्यतनग्रहणं मण्डूकप्लुत्यानुवर्तते । पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् चाल्लट् न तु स्मयोगे पक्षे यथाप्राप्तम् (९) । वसन्तीह पुरा छात्राः अवात्सुः अवसन् ऊषुर्वा । स्मे किम्? यजति स्म पुरा । भविष्यतीत्यनुवर्तमाने (१०) ।

---

(७) पृष्टस्य प्रतिवचनमिति विग्रहः [illegible] किमिति प्रश्ने, ननु करोमि भोरित्युत्तरम् ।

(८) नन्वोरिति भूते इत्यर्थः । पक्षे लुङ् ।

(९) पक्षे यथाप्राप्तमिति लुङ्लटोरभावपक्षे लङ्, परोक्षे तु लिट् ।

(१०) भविष्यति गम्यादयः (३।३।३) इत्यतो भविष्यतीत्यनुवर्तमाने इत्यर्थः ।

## यावत्पुरानिपातयोर्लट् । ५ । ३ । ४ ।

यावद्भुङ्क्ते । पुरा भुङ्क्ते । निपातावेतौ निश्चयं द्योतयतः । निपातयोः किम् । यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ।

## विभाषा कदाकर्ह्योः । ३ । ३ । ५ ।

भविष्यति लट् वा स्यात् । कदा, कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा ।

## किंवृत्ते (११) लिप्सायाम् । ३ । ३ । ६ ।

भविष्यति लट् वा स्यात् । कतरं कतमं वा भोजयसि ? भोजयिष्यसि भोजयितासि वा । लिप्सायां किम् । कः पाटलिपुत्रं गमिष्यति ।

## लिप्स्यमानसिद्धौ च । ३ । ३ । ७ ।

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लट् वा स्यात् । योऽन्नं (१२) ददाति दास्यति दाता वा । स स्वर्गं याति यास्यति याता वा ।

## लोडर्थलक्षणे च । ३ । ३ । ८ ।

---

(११) किमो विभक्त्यन्तेन वृत्तो निष्पन्नः शब्दः कतरकतमादिस्तस्मिन्नुपपदे लिप्सायां गम्यमानायामित्यर्थः ।

(१२) लिप्सायाः पूर्वसूत्रेणैव सिद्धावफलार्थमिदमिति ध्वनयन्त उदाहरन्ति योऽन्नमिति ।

लोडर्थः (१३) प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानाद्धातो-र्भविष्यति लट् वा स्यात्। कृष्णश्चेद्भुङ्क्ते त्वङ्गा रक्ष। पक्षे (१४) लुट्लृटौ।

**लिङ् चोर्ध्वमौहूर्त्तिके। ३। ३। ९।**

ऊर्ध्वं मुहूर्त्ताद्भवः ऊर्ध्वमौहूर्त्तिकः निपातनात्समासः (१५) उत्तरपदवृद्धिश्च। ऊर्ध्वमौहूर्त्तिके भविष्यति लोडर्थगम्ये वर्त्तमानाद्धातोर्लिङ्लटौ वा स्तः। मुहूर्त्तादुपरि उपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति आगन्ता वा। अथ त्वं छन्दोऽधीष्व।

**वर्त्तमानसामीप्ये वर्त्तमानवद्वा। ३। ३। १३१।**

समीपमेव सामीप्यम् स्वार्थे ष्यञ्। वर्त्तमाने लट् (३।२।१२३) इत्यारभ्य उणादयो बहुलमिति (३।३।१) यावत् येनोपाधिना (१६) प्रत्यया उक्तास्ते तथैव वर्त्तमानसमीपे भूते भविष्यति च वा स्युः।

---

(१३) [illegible] प्रैषादिकमर्थ [illegible] कर्त्तव्यमित्यर्थः।

(१४) पक्षे इति कृष्णश्चेद्भोक्ता [illegible] प्रयोग।

(१५) [illegible] निपातनादिति।

(१६) [illegible] वर्त्तमानत्वं [illegible]।

कदा आगतोऽसि ? (१७) अयमागच्छामि अयमागमम्। कदा। गमिष्यसि ? एष (१८) गच्छामि गमिष्यामि वा।

**आशंसायां भूतवच्च। ३। ३। १३२।**

वर्त्तमानसामीप्य इति नानुवर्त्तते। भविष्यति काले भूतवद्वर्त्तमानवच्च प्रत्यया वा स्युराशंसायाम् (१९)। देवश्चेदवर्षीत् वर्षति वर्षिष्यति वा धान्यमवाप्स्म वपामः वप्स्यामो वा। सामान्यातिदेशे विशेषानतिदेशस्तेन लङ्लिटौ न।

**क्षिप्रवचने लृट्। ३। ३। १३३।**

क्षिप्रपर्य्याये उपपदे पूर्व्वविषये लृट् स्यात्। वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा यास्यति शीघ्रं वप्स्यामः। नेति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः शीघ्रं वप्स्यामः।

**आशंसावचने लिङ्। ३। ३। १३४।**

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न तु भूतवत् (२०)। गुरुश्चेदुपेयादाशंसेऽधीयीय। आशंसे क्षिप्रमधीयीय।

---

(१७) आगतोऽसीति भूतकाले प्रश्ने आगच्छामीत्युत्तरवाक्यं भूतकालाभिव्यञ्जकंऽयमिति प्रयोगस्त्वधुनैवागत इति भूतकालस्य वर्त्तमानसामीप्यद्योतनाय। तेनागमनाविनाभूतं श्रमस्वेदादिकमुपदिश्यते एवं भविष्यत्यपि बोध्यम्।

(१८) एष इति गमनोद्योगद्योतनाय, परिकरबन्धादिकद्योतनेन भविष्यतो वर्त्तमानसामीप्यं प्रतीयते।

(१९) आशंसनमाशंसा अप्राप्तस्य प्राप्तुमिच्छा तस्या वर्त्तमानत्वेऽपि तद्विषयस्य भविष्यत्त्वाद्भविष्यतीत्युक्तम्।

(२०) न भूतवदिति न वर्त्तमानवदित्यपि बोध्यम्।

**नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः।३।३।१३५।**

क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ (२१) न। यावज्जीवमन्नमदाद्दास्यति वा। सामीप्यन्तुल्यजातीयेनाव्यवधानम्। येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित (२२)। सोमेनायष्ट। येयममावस्याऽऽगामिनी तस्यामग्नीनाधास्यते सोमेन यक्ष्यते।

**भविष्यति मर्य्यादावचनेऽवरस्मिन्।३।३।१३६।**

भविष्यति काले मर्य्यादायामवरस्मिन् प्रविभागेऽनद्यतनवन्न (२३)। योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्तस्य (२४) यदवरं कौशाम्ब्यास्तत्र सक्तून् पास्यामः।

**कालविभागे चानहोरात्राणाम्।३।३।१३७।**

पूर्वसूत्रं सर्वमनुवर्त्तते (२५)। अहोरात्रसम्बन्धिनि विभागे

---

(२१) भूतानद्यतने लङ् ३।२।१११। भविष्यदनद्यतने लुट् ३।३।१५। एतौ विहितौ तौ नेत्यर्थः।

(२२) लङ्लुटोर्निषेधे सति भूते लुङ् भविष्यति च लृट् भवतीति ग्रन्थकृदुदाहरति अग्नीनाधितेति।

(२३) अक्रियाप्रबन्धार्थं सामीप्यार्थं चारम्भः। अनद्यतनवन्न भवतीत्यर्थः। एष देशकृता मर्य्यादा उत्तरसूत्रे कालकृतेति भेदः।

(२४) तत्र पाटलिपुत्रादवधिभूतात् यदवरं कौशाम्ब्याः अर्वाचीनमित्यर्थः।

(२५) मर्य्यादोक्तौ कालविभागे वाच्ये अवरस्मिन् विभागे भविष्यति अनद्यतनवन्न, न तु कालविभागे अहोरात्रसम्बन्धे नेत्यर्थः।

प्रतिषेधार्थमिदम्। योगविभाग उत्तरार्थः। योऽयं वत्सर आगामी तस्य यद्वरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। अनहोरात्राणामिदम् योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः तत्राध्येतास्महे।

## परस्मिन्विभाषा। ३। ३। १३८।

अवरस्मिन्नर्जम्पूर्वसूत्रद्वयमनुवर्त्तते। अप्राप्तविभाषेयम्। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे-अध्येतास्महे। लिङ्निमित्ते २६ लृङ् क्रियातिपत्तौ (उः पृ०) भविष्यतीत्येव। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्।

## भूते च (२७)। ३। ३। १४०।

पूर्वसूत्रं सम्पूर्णमनुवर्त्तते।

## वोताप्योः। ३। ३। १४१।

वा आ उताप्योः उताप्योरित्यतः प्राग्भूते लिङ्निमित्ते २८) लृङ् वेत्यधिक्रियते। पूर्वसूत्रन्तु उताप्योरित्यादौ प्रवर्त्तत इति विवेकः।

## गर्हायां लडपिजात्वोः। ३। ३। १४२।

---

(२६) आदौ भ्वादिप्रकरणे (उ२०पृ०) व्याख्यातम्।

(२७) लिङ्निमित्ते लृङ् स्यात् भूते भविष्यति च क्रियाऽनिष्पत्तावित्यर्थः।

(२८) लिङ्निमित्ते भूते एतावद्विकल्पो भविष्यति तु नित्य इति। तत्त्व०

आभ्यां योगे लट् स्यात् कालत्रये (२९) गर्हायाम्। लङा-दीन् (३०) परत्वाद्बाधते। अपि जायां त्यजसि जातु गणिकामाधत्से गर्हितमेतत्।

## विभाषा कथमि लिङ् च। ३।३।१४३

गर्हायामित्येव कालत्रये लिङ्। चाल्लट्। कथं धर्मं त्यजेस्त्य-जसि वा। पक्षे कालत्रयलकाराः। अत्र भविष्यति नित्यं लृङ्, भूते वा। कथं नाम तत्रभवान् धर्मं त्यक्ष्यत्।

## किंवृत्ते लिङ्लृटौ। ३। ३। १४४।

गर्हायामित्येव विभाषा न त्वनुवर्त्तते (३१)। कः कतरः कतमो वा हरिं निन्देत् निन्दिष्यति वा। लृङ् प्राग्वत् (३२)।

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि। ३। ३। १४५।

गर्हायामिति निवृत्तम् (३३)। अनवक्लृप्तिरसम्भावना। अम-र्षोऽक्षमा। न सम्भावयामि, न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा। कः, कतरः, कतमो वा हरिं निन्देत् निन्दिष्यति वा। लृङ् प्राग्वत्।

(२९) [illegible] ।

(३०) [illegible] इति भावः ।

(३१) लिङ्लृटौ [illegible] इत्यर्थः। नानुवर्त्तते इति [illegible] न भवतीत्यर्थः ।

(३२) [illegible] भविष्यति नित्यं लृङ् भूते वेत्यर्थः ।

(३३) [illegible] ।

### किंकिलास्त्यर्थेषु लृट्। ३। ३। १४६।

अनवक्लृप्त्यमर्षयोरित्येतत् गर्हायां चेति यावदनुवर्तते। किंकिलेतिसमुदायः क्रोधद्योतक उपपदम्। अस्त्यर्थाः अस्ति-भवतिविद्यतयः। लिङोऽपवादः (३४)। न श्रद्दधे, न मर्षये वा किंकिल त्वं शूद्रान्नं भोक्ष्यसे। अस्ति भवति विद्यते वा शूद्रान्नमशिष्यसि। अत्र लृङ् न।

### जातुयदोर्लिङ्। ३। ३। १४७।

यदायद्योरुपसंख्यानम्। लृटो (३५) ऽपवादः। जातु यत् यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि, न मर्षयामि वा। लृङ् प्राग्वत्।

### यच्चयत्रयोः (३६)। ३। ३। १४८।

यच्च यत्र वा त्वमेवं कुर्याः, न श्रद्दधे, न मर्षयामि।

### गर्हायां च (३७)। ३। ३। १४९।

अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यमेतत्।

### चित्रीकरणे च। ३। ३। १५०।

---

(३४) प्राप्तयोर्लिङ्लृटोर्लृङ्ग्रहणात् लिङ् निवर्तते इत्याशयेनाह लिङो-ऽपवाद इति।

(३५) लिङ्लृटोः प्राप्तयोर्वचनमिदं लृटो बाधनार्थमित्याह लृट इति।

(३६) योगविभाग उत्तरसूत्रद्वये यच्चयत्रयोरेवानुवृत्त्यर्थः।

(३७) कालत्रयेऽयं विधिर्भवति सर्वलकारापवादः।

यच्च यत्र वा शूद्रं याजयेः आश्चर्यमेतत्।

शेषे लृडयदौ। ३। ३। १५१।

यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात्। आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति। अयदौ किम् आश्चर्यं यदि सोऽधीयीत।

उताप्योः समर्थयोर्लिङ् (३८)। ३। ३। १५२।

बाढमित्यर्थेऽनयोर्लिङ् स्यात्। उत, अपि वा हन्यादघं हरिः। समर्थयोः किम्। उत दण्डः पतिष्यति अपि धास्यति द्वारम्। प्रश्न प्रच्छादनञ्च गम्यते इति अर्थः। इह लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लिङ्।

कामप्रवेदनेऽकच्चिति। ३। ३। १५३।

स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यात् न तु कच्चिति। कामो मे भुञ्जीत भवान्। अकच्चितीति किम् कच्चिज्जीवति।

सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे। ३। ३। १५४।

अलमर्थोऽत्र प्रीतिः। सम्भावनमित्यलमिति च प्रथमान्ता षष्ठ्या विपरिणम्यते। सम्भावनेऽर्थे लिङ् स्यात्तच्चेत्सम्भावना-

(३८) भाष्यमते [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]
भूतेऽपि [illegible] [illegible]।

गमनमलमिति, अलमिति शिष्टप्रयोगे सति। अपि (३९) गिरिं शिरसा भिन्द्यात्। सिद्धाप्रयोगे किम् अलं कृष्णो हस्तिनं हनिष्यति।

**विभाषा धातौ सम्भावनवचनेऽयदि। ३। ३। १५५।**

पूर्वसूत्रमनुवर्त्तते। सम्भावनार्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात् न तु यच्छब्दे। पूर्वेण नित्ये प्राप्ते वचनम्। सम्भावयामि भुञ्जीत, भोक्ष्यते वा भवान्। अयदि किम् सम्भावयामि यद्भुञ्जीथास्त्वम्।

**हेतुहेतुमतोर्लिङ्। ३। ३। १५६।**

वा स्यात्। कृष्णं नमेच्चेत् सुखं ४० यायात् कृष्णं नंस्यति चेत् सुखं यास्यति। भविष्यत्येवेष्यते। नेह। हन्तीति पलायते।

**इच्छार्थेषु लिङ्लोटौ (४१)। ३। ३। १५७।**

इच्छामि भुञ्जीत, भुङ्क्तां वा भवान्। एवङ्कामये प्रार्थये इत्यादियोगे बोध्यम्। कामप्रवेदन इति वक्तव्यम् *। नेह। इच्छन् करोति।

---

(३९) सम्भावनाद्योतकोऽपिशब्दः गिरिभेदनं पर्याप्तमिति सम्भावनादिति वाक्यशामाघ्ये लिङ् सम्भावनञ्च क्रियासु योग्यतेति बोध्यम्।

(४०) कृष्णनमनं सुखप्राप्तौ हेतुरिति क्रिययोः कार्यकारणभावोऽत्र लिङा द्योत्यते।

(४१) इच्छार्थेषूपपदेषु धातोर्लिङ्लोटौ स्तः लिङ् चेत्यत (३।३।१५८) समान-कर्तृकेष्विच्छार्थेषु लिङ् विधानादिह असमानकर्तृकेष्विति बोध्यम्।

लिङ् च। ३। ३। १५८।

समानकर्त्तृकेषु इच्छार्थेषूपपदेषु लिङ् स्यात्। भुञ्जीयेतीच्छति।

इच्छार्थेभ्यो विभाषा वर्त्तमाने। ३। ३। १६०।

लिङ् स्यात् पक्षे लट्। इच्छेत इच्छति। कामयेत कामयते। विधिनिमन्त्रणेति (३।३।१६१) लिङ्। विधौ। यजेत। निमन्त्रणे। इह भुञ्जीत भवान्। आमन्त्रणे। इहासीत। अधीष्टे। पुत्रमध्यापयेद्भवान्। सम्प्रश्ने। किम्भो वेदमधीयीय उत तर्कम्। प्रार्थने। भो भोजनं लभेय। एवं लोट्।

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। ३। ३। १६३।

प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा। भवता यष्टव्यम्। भवान् यजताम्। चकारेण (४२) लोटोऽनुकर्षणं प्राप्तकालार्थम् (४३)।

लिङ् चोर्ध्वमौहूर्त्तिके (४४)। ३। ३। १६४।

प्रैषादयोऽनुवर्त्तन्ते। मुहूर्त्तादूर्ध्वं यजेत यजताम् यष्टव्यम्।

---

(४२ चकारेणेति लोट् चेति ३।३।१६२) पूर्वसूत्रस्य [illegible] अन्वेष-सूत्रे इहोपन्यस्तस्य [illegible] भावः।

(४३) प्राप्तकालार्थमिति प्रैषातिसर्गयोः पूर्वेणैव सिद्धत्वादिति भावः।

(४४ प्राप्तकालविवक्षायां प्राप्तस्य लिङो विधानार्थमिदं सूत्रं प्रैषातिसर्गयोः पूर्वेण प्राप्त एव लिङ्लोट्कृत्यानां कालविशेषे लिङा बाधा मा भूदिति चकार इति बोध्यम्।

**स्मे लोट् । ३ । ३ । १६५ ।**

पूर्वसूत्रस्य विषये लिङ्कृत्यानामपवादः । ऊर्ध्वं मुहूर्त्तात् यजतां स्म ।

**अधीष्टे च । ३ । ३ । १६६ ।**

स्मे उपपदेऽधीष्टे लोट् स्यात् । त्वं स्म अध्यापय ।

**लिङ् यदि । ३ । ३ । १६८ ।**

यच्छब्दे उपपदे कालसमयवेलासु (४५) च लिङ् स्यात् । कालः समयो वेला वा यद्भुञ्जीत भवान् ।

**अर्हे (४६) कृत्यतृचश्च । ३ । ३ । १६९ ।**

चाल्लिङ् । त्वं कन्यां वहेः ।

**शकि लिङ् च । ३ । ३ । १७२ ।**

शक्तौ लिङ् स्यात् । चात्कृत्याः । भारं त्वं वहेः । माङि लुङ् (७८४०) मा कार्षीः । कथं मा भवतु मा भविष्यतीति नायं माङ् किन्तु माशब्दः ।

**धातुसम्बन्धे प्रत्ययाः । ३ । ४ । १ ।**

---

(४५) कालसमयवेलासु तुमुन् (७४११५०) इत्यतोऽनुवृत्तं कालेत्यादीन्यपि उपपदीभवन्ति यच्छब्दोपरिस्थानि । अयं तुमुनोऽपवादः ।

(४६) अर्हे योग्ये कर्त्तरि गम्यमाने कृत्यतृचो भवन्तीत्यर्थः । त्वया कन्या वोढव्या वहनीया त्वं कन्याया वोढा त्वं कन्याया उद्वोढाऽसि कन्यो-द्वहनं तव योग्यमित्यर्थं वदन्ति ।

अनेकक्रियासमुच्चये वाच्ये प्रागुक्तं (५१) वा स्यात्।

## यथाविध्यनुप्रयोगः पूर्वस्मिन् (५२) ।३।४।४।

आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः।

## समुच्चये सामान्यवचनस्य।३।४।५।

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। तत सङ्ख्याकालयोः पुरुषविशेषादेश्च चाभिव्यक्तिः। क्रियासमभिहारे द्वे वाच्ये। याहि याहीति याति। पुनः पुनरतिशयेन वा यानं समस्यार्थे एककर्तृकं वर्त्तमानं यानं यातीत्यस्य इति शब्दस्वभेदान्वये तात्पर्यं ग्राहयति। एवं यातः। यान्ति। यासि। याथः। याथ। यात यातेति यूयं याथ। याहि याहीत्ययासीत् यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वविषये पक्षेऽधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चये तु सक्तून् पिब धानाः खादेत्यभ्यवहरति। अन्न भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते। तथ्यमोदनं पिबत खादतेत्यभ्यवहरथ। भुङ्ग्ध्वम् आस्वादयध्वमित्यभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वय एव सक्तून् पिबति धानाः खादति अन्नं भुङ्क्ते दाधिकमास्वादते एतेन "पुरीमवस्कन्द लुनीहि

---

(५१) प्रागुक्त धातोर्लोट् लोटो हिस्वादिस्त्वादि कार्यमित्यर्थः।

(५२) पूर्वस्मिन्नित्यस्य क्रियासमभिहारे इत्यर्थः।

नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः" इति व्याख्यातम् अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात् । इह पुनः पुनरवस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव द्वितीयसूत्रे क्रियासमभिहार इत्यस्यानुवृत्तेः लोडन्तस्य द्वित्वापत्तेश्च । पुरीमवस्कन्देत्यादिमध्यमपुरुषैकवचनमित्यपि कथञ्चिद्भ्रम एव पुरुषवचनमत्र इह नियुक्तत्वात् ।

इति लकारार्थप्रक्रिया ।

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धे तिङन्तं समाप्तम् ।

---

इति श्रीमत्तारानाथतर्कवाचस्पतिभट्टाचार्यविरचितायां सरलाख्यायां सिद्धान्तकौमुदीव्याख्यायां तिङन्तप्रकरणव्याख्यानम् ।

समाप्तम् ।

## ईद्यति। ६। ४। ६५।

यति परे पात ईत्स्यात्। गुण:। देयम्। ग्लेयम्। तकिशसि-
चतियतिजनिभ्यो यद्वाच्य:॥। तक्यम्। शस्यम्। चत्यम्।
यत्यम्। जन्यम्। जनेर्यद्विधि स्वरार्थ: ण्यतापि रूप-
सिद्धे। न च वृद्धिप्रसङ्ग: जनिवध्योश्चेति ७।३।३५। निषेधात्।
हनो वा यद्वधश्च वक्तव्य:॥(९। वध्य:। पक्षे वक्ष्यमाणो
(७।१०९सू०) ण्यत्। घात्य:।

## पोरदुपधात्। ३। १। ९८।

पवर्गान्तादुदुपधाद्यत्स्यात्। ण्यतोऽपवाद:। शप्यम्। लभ्यम्।
आनुबन्धकृत १०। मत्वाद्रूप्यमतो न ण्यत्। तव्यदादयस्तु स्युरेव।

## आङो यि। ७। १। ६५।

आङ: परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते (११)।
नुमि कृतेऽदुपधत्वाभावाण्ण्यदेव आलम्भ्यो गौ:।

## उपात्प्रशंसायाम्। ७। १। ६६।

उपलम्भ्य: साधु:। स्तुतौ किम् उपलभ्यं यस्य उपलभ्य:।

---

(९) हन्तेर्वा यद् स्यात् वधश्चादेशोऽनयोर्निरवकाशो वधादेशो नित्य एव।

(१०) आनुबन्धानां प्रत्ययस्वरूपत्वाभावात् तदूनमनादृत्यं नानीकतोऽतो यता
स्वादुपाध्यते इति भाव:।

(११) प्रत्ययोत्पत्ते: प्रागेव नुमि कृते तु अदुपधत्वाभावाण्ण्यत् बहिरङ्गतो विव-
क्षिते इत्युक्तम्।

शकिसहोश्च ।३।१।९९।

शक्यम्। सह्यम्।

गदमदचरयमश्चानुपसर्गे ।३।१।१००।

गद्यम्। मद्यम्। चर्यम्। चरेराङि चागुरौ *। आचर्यो देशः गन्तव्य इत्यर्थः। अगुरौ किम् आचार्यो गुरुः। यमेर्नियमार्थम् (१२) सोपसर्गान्मा भूदिति। प्रयाम्यम्। निपूर्वाद्यमः "तेन तत्र भवेदिह नियम्यमिति" वार्त्तिकप्रयोगात्। "एतेनानियम्यस्य नायुक्ति" "त्वया नियम्या ननु दिव्यचक्षुषेत्यादि" व्याख्यातम्। नियमे साधुरिति वा।

अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ।३।१।१०१।

वदेर्नञि उपपदे वदः सुपीति (३।१।१०६) यत्क्यपौ प्राप्तौ गर्ह्य एव सोऽपि गर्हायामित्युभयार्थं निपातनम्। अवद्यमघम्। गर्ह्यं किम् अनुद्यं गुरुनाम। तद्धि न गर्ह्यं वचनानर्हञ्च।

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च।

श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोरिति" स्मृतेः।

पण्या गौः व्यवहर्तव्या (१३) इत्यर्थः। पाण्यमन्यत् स्तुत्यर्थ-

---

(११) [illegible] नियमार्थं [illegible] [illegible] ।

(१२) [illegible] निपातनमिति [illegible] ।

मित्यर्थः। अनिरोधोऽप्रतिबन्धस्तस्मिन् विषये वृङो यत्। प्रतीत वर्य्या (१४) कन्या। वृत्या (१५) अन्या।

वह्यं करणम्। ३। १। १०२।

वहत्यनेनेति वह्यं शकटम्। करणं किम्। वाह्यम् वोढव्यम्।

अर्यः स्वामिवैश्ययोः। ३। १। १०३।

ऋ गतौ अस्माद्यत्। ण्यतोऽपवादः। अर्यः स्वामी वैश्यो वा। अनयोः किम्। आर्य्यो ब्राह्मणः प्राप्तव्य इत्यर्थः।

उपसर्य्या काल्या प्रजने। ३। १। १०४।

गर्भग्रहणे प्राप्तकाला (१६) चेदित्यर्थः। उपसर्या गौः गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। प्रजने काल्येति किम्। उपसार्य्या काशी प्राप्तव्येत्यर्थः।

अजर्य्यं सङ्गतम्। ३। १। १०५।

नञ्पूर्वाज्जीर्य्यतेः कर्त्तरि यत् सङ्गतं चेद्विशेष्यम्। न जीर्य्य

(१४) शतयज्ञोऽनियतपरे कन्याया वरणे यद्विधाने नियमो नास्तीत्य-प्रतिबन्धस्य स्वार्थः। वृङ एव समर्थाविशेषेण पङ्कणस्यैवानिरोध-रूपार्थस्य सम्भवात्। तत्त्व०।

(१५) वर्णनिरोधे स्वतुल्यो कर्मो वरणे द्वयस्यापि स्यादित्याशयेनाह वृत्येति।

(१६) काले प्राप्तोऽस्या इति काल्या समयस्तदस्य प्राप्तमिति (५.४८सू०) तत्राधिकारे कालाद्यादिति (५।८सू०) यता सिद्धमित्याशयेन काल्या-पदं व्याचष्टे प्राप्तकालेति।

सौन्दर्य्यगुणा मृषोद्याः" । रोचते रुच्यः । गुपेरादेः कुत्वञ्च संज्ञायाम् । सुवर्णरजतभिन्नं कुप्यम् । गोप्यमन्यत् । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः । कर्मकर्त्तरि । पच्ये तु कर्म्मणि कृष्टपाक्याः । न व्यथतेऽव्यथ्यः ।

## भिद्योद्ध्यौ नदे । ३ । १ । ११५ ।

भिदेरुज्झेश्च क्यप् । उज्झेर्धत्वञ्च । भिनत्ति कूलम्भिद्यः । उज्झत्युदकमुद्ध्यः । नदे किम् भेत्ता । उज्झिता ।

## पुष्यसिध्यौ नक्षत्रे । ३ । १ । ११६ ।

अधिकरणे क्यप् निपात्यते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन् सिध्यः ।

## विपूयविनीयजित्या मुञ्जकल्कहलिषु । ३ । १ । ११७ ।

पूङ्नीजिभ्यः क्यप । विपूयो मुञ्जः रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः । विनीयः कल्कः पिष्ट औषधविशेष इत्यर्थः । पापमिति वा । जित्या हलिः बलेन कृष्टव्य इत्यर्थः । कृष्टसमीकरणार्थं स्थूलकाष्ठम् । अन्यत्र विपव्यम् । विनेयम् । जेयम् ।

## प्रत्यपिभ्यां ग्रहेः । ३ । १ । ११८ ।

छन्दसीति वक्तव्यम् । प्रतिगृह्यम् । अपिगृह्यम् । लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् ।

## पदास्वैरिबाह्यापक्ष्येषु च। ३। १। ११९।

अवगृह्यम् (२९)। प्रगृह्यम्पदम् (३०) अस्वैरी परतन्त्रः। गृह्यकाः शुकाः (३१) पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः। बाह्यायां ग्रामगृह्या सेना ग्रामबहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशात् पुंनपुंसकयोर्न। पक्षे भवः पक्ष्यः दिगा-दित्वाद्यत् (४। ३। ५४)। आर्य्यैर्गृह्यते आर्य्यगृह्यः तत्पक्षाश्रित इत्यर्थः।

## विभाषा कृवृषोः। ३। १। १२०।

क्यप् स्यात्। कृत्यम्। वृष्यम्। पक्षे

## ऋहलोर्ण्यत्। ३। १। १२४।

ऋवर्णान्ता ३२ हलन्ताच्च धातोर्ण्यत् स्यात्। कार्य्यम्। वर्ष्यम्।

## युग्यञ्च पत्रे। ३। १। १२१।

पत्रं वाहनम्। युग्यो गौः। अत्र क्यप् कुत्वञ्च निपात्यते।

---

(२९) अवगृह्यमिति अवग्रहो विच्छेद अवान्तरसंज्ञा सूचित पदपाठ-कालो विच्छिद्यमानमित्यर्थः।

(३०) प्रगृह्यमिति प्रकृतिभावाद्यवग्रहणाभावाय पदविच्छेदाभाव प्रयोगः यस्य पदस्य या संज्ञा विहिता तत्सम्बन्धि विषयत्वस्य पदाश्रयत्वेन तथैव प्रगृह्यमपादस्यौचित्येऽपि अवयवधर्मस्य समुदाये आरोपात् प्रगृह्यत्वमिति बोध्यम्।

(३१) "गृह्यकाः पञ्जरान्तेवासी गृह्यकाश्च ते" इत्यमरोक्ते पक्षि-मृगयोरेव निपातनम्।

(३२) ऋहलोरिति समाहारे द्वन्द्वे हल्ग्रहणात् अधातोर्न ण्यदपि न ऋवर्णान्तस्यानेनाद्य ऋवर्णान्तादिति।

अमावस्यदन्यतरस्याम् । ३ । १ । १२२ ।

अमोपपदाद्वसेरधिकरणे ण्यत्। वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते। अमा सह वसतोऽस्यां चन्द्रार्कौ अमावास्या अमावस्या। चजोः कु घिण्ण्यतोः (७।३।५२)। ण्यति इति (७।३।५२) कुत्वम्। पाक्यम्। पाणौ सृजेर्ण्यद्वाच्यः ॥। ऋदुपधलक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः। समवपूर्वाच्च ॥। समवसर्ग्या।

न क्वादेः। ७। ३। ५९।

क्वादेर्धातोश्चजोः कुत्वं न। गर्ज्यम्। वार्त्तिककारस्तु घञीति सूत्रे निष्ठायामनिट इति (७।३।५३) पूरयित्वा न क्वादेरित्यादि प्रत्याचख्यौ तेन घञि नमित्रप्रभृतीनामेव कुत्वविधायां सेट्त्वात्। प्रवृत्तप्रभृतीनाम् क्वादित्वेऽपि कुत्वं स्यादेव ३३। सूत्रमते न यद्यपि विपरीतस्यात् तथापि यथोत्तरं मुनीनाम्प्रामाण्यम् ३४।

अजिव्रज्योश्च। ७। ३। ६०।

न कुत्वम्। समाजः। परिव्राजः।

भुजन्युब्जौ (३५) पाण्युपतापयोः। ७।३।६१।

---

(३३) [illegible] क्वादित्वेन [illegible] (७।३।५९) [illegible] निष्ठायामनिट् [illegible] भाव।

(३४) [illegible] भाव।

(३५) [illegible]

एतयोरेतौ निपात्यौ। भुज्यतेऽनेनेति भुजः पाणिः। हल-श्चेति (३।३।१२१) घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोग। पाण्युपतापयोः किम् भोगः समुद्गः।

## प्रयाजानुयाजौ यज्ञाङ्गे ७।३।६२।

एतौ निपात्यौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। यज्ञाङ्गे किम् प्रयागः, अनुयागः।

## वञ्चेर्गतौ। ७।३।६३।

कुत्वन। वञ्च्यम्। गतौ किम् वञ्च्यं काष्ठम् कुटिली-कृतमित्यर्थः।

## ओक उचः के। ७।३।६४।

उचेर्गन्कुत्वे निपात्येते के परे। ओकः, शकुन्तवृषली। इगुपधलक्षणः कः। घञा सिद्धे अन्तोदात्तार्थमिदम्।

## ण्य आवश्यके (३६)। ७।३।६५।

कुत्वन। अवश्यपाच्यम्।

## यजयाचरुचप्रवचर्चश्च। ७।३।६६।

ण्ये कुत्वन। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यम्। ग्रन्थविशेषः। ऋच - अर्च्यम्। ऋदुपधत्वेऽपि अतएव

(३६) आवश्यकार्थे [illegible] एव [illegible] तदर्थे [illegible] ओरावश्यके इति (३।१।१२५) [illegible] बोध्यम्।

प्रापणा (२७) ध्वत्। त्यजेश्च। त्याज्यम्। त्यजिपूज्योश्चेति काशिका। तत्र पूजेर्ग्रहणं चिन्त्यं भाष्यानुक्तत्वात्। ध्यप्रकरणे त्यजेरुपसंख्यानमिति हि भाष्यम्।

**वचोऽशब्दसंज्ञायाम्। ७। ३। ६७।**

वाच्यम्। शब्दाख्यायां तु वाक्यम्।

**प्रयोज्यनियोज्यौ शक्यार्थे। ७। ३। ६८।**

प्रयोक्तुं शक्यः प्रयोज्यः नियोक्तुं शक्यो नियोज्यो भृत्यः

**भोज्यं भक्ष्ये (२८)। ७। ३। ६९।**

भोग्यमन्यत्। ण्यत्प्रकरणे लपिदभिभ्यां चेति (२९) वक्तव्यम् *। लाप्यम्। दभिर्धातुपाठेऽनुपठितोऽपि वार्त्तिकबलात् स्वीकार्यः। दाभ्यम्।

**ओरावश्यके। ३। ३। १२५।**

उवर्णान्ताण्ण्यत् स्यादवश्यम्भावे द्योत्ये। लाव्यम्। पाव्यम्।

**आसुयुवपिरपिलपित्रपिचमश्च। ३। १। १२६।**

---

(२७) [illegible] भवतीति [illegible] भाव।

(२८) भक्ष्य [illegible] विवक्षित [illegible] भोज्या [illegible]।

(२९) [illegible] इति (३१० सू०) [illegible]।

षूञ्—आसाव्यम्। यु मिश्रणे याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। चाप्यम्।

## आनाय्योऽनित्ये। ३। १। १२७।

आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते। दक्षिणाग्निविशेष एवेदम् स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात्। आनेयोऽन्यो घटादिः वैश्यकुलादे (४०) रानीतो दक्षिणाग्निश्च।

## प्रणाय्योऽसम्मतौ। ३। १। १२८।

सम्मतिः प्रीतिविषयीभवनं कर्मव्यापारः (४१)। तथा भोगेष्वादरोऽपि सम्मतिः। प्रणाय्यश्चोरः प्रीत्यनर्ह इत्यर्थः। प्रणाय्योऽन्तेवासी विरक्त इत्यर्थः। प्रणेयोऽन्यः।

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु। ३। १। १२९।

मीयतेऽनेन पाय्यम्मानम्। ण्यत् धात्वादेः पत्वञ्च। आतो युगिति युक् (उ२ १०४)। सम्यङ्नीयते होमार्थमग्निम्प्रतीति सान्नाय्यं हविर्विशेषः (४२)। ण्यदायादेश समा दीर्घश्च निपात्यते।

---

(४०) दक्षिणाग्नेर्योनिर्विकल्प्यते वैश्यकुलात्, त्रिपतो भ्राष्ट्राद्, गार्हपत्याद्वेत्यादिपरपाठम्।

(४१) कर्मव्यापार इति चोकानां प्रीतिविषयीभवनरूपस्य कर्मणो व्यापारस्य चोरादावसत्त्वादसम्मतिः। तस्य चार्थद्वयमित्याह तथेति।

(४२) हविर्विशेष इति "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया-मिति" विशिष्टदधिपयोविशेषरूपः।

निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः। अधिकरणे ण्यत् आयो धात्वादेः कुत्वञ्च निपात्यते। धीयतेऽनया समिदिति धाय्या ऋक्।

### क्रतौ कुण्डपाय्यसञ्चाय्यौ।३।१।१३०।

कुण्डेन पीयतेऽस्मिन् सोमः कुण्डपाय्यः क्रतुः। सञ्चीयतेऽसौ सञ्चाय्यः।

### अग्नौ परिचाय्योपचाय्यसमूह्याः।३।१। १३१।

अग्निविषयार्थे (४२) एते साधवः। अन्यत्र तु परिचेयम्। उपचेयम्। संवाह्यम्।

### चित्याग्निचित्ये च।३।१।१३२।

चीयतेऽसौ चित्योऽग्निः। अग्नेश्चयनमग्निचित्या। प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च (४३)। त्वया गन्तव्यम्। गमनीयम्। गम्यम्। इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः। स्त्र्यधिकारादूर्ध्वं (४४) वासरूपविधिर्नेति ज्ञापयति तेन (४५) क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम्। अर्हे

---

(४२) [illegible]

[illegible]।

(४४) [illegible]।

(४५) [illegible]।

कृत्यतृचश्च (उ॰ ८१४॰)। स्तोतुमर्हः स्तुत्यः स्तुतिकर्म । स्तोता स्तुतिकर्त्ता । लिङा बाधा मा भूदिति कृत्यतृचोर्विधिः ।

**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । ३ । ४ । ६८ ।**

एते कृत्यप्रत्ययान्ताः कर्त्तरि वा निपात्यन्ते । पक्षे तयोरेवेति (उ॰ ६८४) सकर्म्मकात्कर्म्मणि, अकर्म्मकात् भावे ज्ञेयाः । भवतीति भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा इत्यादि । शकि लिङ् च (उ॰ ८१४॰)। चात्कृत्याः । वोढुं शक्यो वोढव्यः । वहनीयो वाह्यः । लिङा बाधा मा भूदिति कृत्योक्तिः । लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे (उ॰ ८१४॰) कृत्याश्चेति सूत्रजम् अर्हे (उ॰ ८१४॰) कृत्यतृचोर्ग्रहणम् ।

इति कृत्यकृत्प्रक्रिया ।

---

इति (७२५।१०) विकल्पार्हत्वं न निषेधः। क्रमिता। तदर्हत्वमेव तद्विषयत्वम् तेन क्रन्त्वेत्यपीति केचित्। गमेरि-ड्त्यत्र (७।०२।०) परस्मैपदग्रहणस्तङानयोरभावं लक्षयति। सञ्जिगमिषिता। एवं न इडक्षतुर्भ्यः (७२८।०)। विवृक्षिता। यङन्तात् ण्वुल् यलोपस्य स्थानिवत्त्वान्न वृद्धिः। पापचकः। यङ्लुगन्तात्। पापाचकः।

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः।३।१।१३४।

नन्द्यादे(२) ल्युर्ग्रहादे-(३)-र्णिनिः पचादे-(४) रच् स्यात्। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। मधुसू-दनः। विशेषेण भीषयत इति विभीषणः। लवणः। नन्दादि-गणे निपातनाण्णत्वम्। ग्राही। स्थायी। मन्त्री। विशयी।

---

(२) नन्दनः वाशन· मदन· दूषण· साधन· वर्द्धनः शोभन· रोचनः (सहितपिदम· संज्ञायाम् ग०)। सहनः तपन· दमनः। जल्पनः रमणः दर्पण· सङ्क्रन्दनः सङ्कर्षणः संहर्षणः जनार्दन· यवन. मधुसूदनः विभीषणः लवण चित्तविनाशनः कुलदमनः शत्रुदमनः इति नन्द्यादि.।

(३) ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी (रक्षश्रुवपशां नौ ग०) निरक्षी निश्रावी निवापी निशायी) याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम् ग०) अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी (अचामचित्तकर्तृकाणाम् ग०) अकारी अहारी अविनायी। विशायी विषायी (विशयी विषयी देशे ग०) (अभिभावी भूते ग०) अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिः।

(४) पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् दोषट् रज मद क्षप क्षिप सेव कोष मेष मर्त्त ग्रष दर्प सर्प दश दर्प जारभरा श्वपच। पचादिराकृतिगणः।

पचः । चरः । चलः । पतः । वदः । हनः । पाटः । रात्रेः कृतीति (६।३।७२) वा मुम् । रात्रिंचरो रात्रिचरः ।

## इगुपधज्ञाप्रीकिरः कः । ३ । १ । १३५ ।

एभ्यः कः स्यात् । विक्षिपः । विलिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वासरूपविधिना ण्वुल्तृचावपि । लेपकः । लेप्ता ।

## आतश्चोपसर्गे । ३ । १ । १३६ ।

कः स्यात् । श्याद्व्यधेति (३।१।१४१) णस्यापवादः । सुग्लः । सुम्लः ।

## पाघ्राध्माधेट्दृशः शः । ३ । १ । १३७ ।

पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेट्टित्वात् स्तनन्धयीति स्त्रीत्वे ङीप् प्राप्तः स्त्रियोऽन्यत्र नेष्यत इति हरदत्तः । पश्यतीति पश्यः । घ्रः संज्ञायाम्, व्याघ्रादिभिरिति + निर्देशात् ।

## अनुपसर्गाल्लिम्पविन्द (८) धारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ।

शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः । वेदयः ।

---

+ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे इति (२।१।५६) सूत्रे इति शेषः ।

(८) लिम्पविन्देति तुदाद्यन्तर्गणमुचादित्वात् शे परे भाविना नुमा कृतनुमौ निर्दिष्टौ तेन भ्वाद्यर्थकानां नेति बोध्यम् ।

सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् (१३)। अवश्यायः। प्रतिश्यायः। आत् -दायः। धायः। व्याघ्रः। स्रु गतौ आङ्पूर्वः सम्पूर्वश्च आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लिहः। श्लिषः श्वासः।

## दुन्योरनुपसर्गे।३।१।१४२।

णः स्यात्। दुनोतीति दावः। नासिद्धवचनात् दुनोतेरपि णः। इत्यर्थम् [illegible] (३२ [illegible])। दवः। नयतीति नायः। उपसर्गे तु। प्रदवः। प्रणयः।

## विभाषा ग्रहः।३।१।१४३।

णो वा। पक्षेऽच्। व्यवस्थितविभाषेयम्। तेन जलचरे ग्राहः। ज्योतिषि ग्रहः। भवतेश्चेति काशिका। भवो देवः संसारश्च। भावाः पदार्थाः। भाष्यमते तु प्रामादिकमिदम् [illegible]-ण्यन्तादच्। भावः।

## गेहे कः।३।१।१४३।

गेहे कर्तरि (१४) ग्रहेः कः स्यात्। गृह्णाति धान्यादिकमिति गृहम्। तात्स्थ्याद् गृहाः (१५) दाराः।

---

(१३) अन्यथा आतश्चोपसर्गे इति (३२ [illegible]) विहितेन कः सामान्यविहितस्य णस्य बाधकः स्यादिति भावः।

(१४) गेहे इति प्रत्ययार्थस्य कर्तुर्विशेषणं नोपपदं [illegible] संयुक्तेभ्यः (पृ६२९) इति निर्देशादित्याशयेनाह गेहे कर्तरीति।

(१५) मञ्चाः क्रोशन्तीत्यादौ मञ्चस्थपुरुष इव गृहस्थदारेषु गृहशब्द औपचारिक इत्यर्थः।

**शिल्पिनि ष्वुन् । ३ । १ । १४५ ।**

क्रियाकौशलं शिल्पम्तद्वत्कर्त्तरि (१६) ष्वुन् स्यात्। नृतिखनिरञ्जिभ्य एव *। नर्त्तकः नर्त्तकी। खनकः खनकी। रजकरजने च रञ्जेर्नलोपो वाच्यः। रजकः रजकी। भाष्यमते तु नृतिखनिभ्यामेव ष्वुन्। रञ्जेस्तु शिल्पिसंज्ञयो-रिति (७१८ पृ०) क्वुन्। टाप्। रजिका। पुंयोगे तु। रजकी।

**गस्थकन् । ३ । १ । १४६ ।**

गायते (१७) स्थकन् स्यात् शिल्पिनि कर्त्तरि। गाथकः।

**ण्युट् च । ३ । १ । १४७ ।**

गायनः। टित्त्वाद्गायनी।

**हश्च व्रीहिकालयोः । ३ । १ । १४८ ।**

हातेर्जहातेश्च ण्युट् स्यात् व्रीहौ काले च कर्त्तरि। जहा-त्युदकमिति (१८) हायनो व्रीहिः। जहाति भावानिति हायनो वर्षम्। जिहीते प्राप्नोतीति वा।

**प्रुसृल्वः (१९) समभिहारे वुन् । ३ । १ । १४९**

---

(१६) [illegible] शिल्पिनीति [illegible]
[illegible] ।

(१७) [illegible]
[illegible] ।

(१८) उदकादिविकारं [illegible] जहाति परित्यजति [illegible] ।

(१९) प्रुसृल्व इति [illegible] ।

समभिहारग्रहणेन साधुकारित्वं लक्ष्यते (२०)। प्लवकः। सरकः। लवकः।

## आशिषि च। ३। १। १५०।

आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात् कर्त्तरि (२१)। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः प्रयोक्तृधर्मः आशासितुः पित्रादेरियमुक्तिः।

## कर्मण्यण्। ३। २। १।

कर्मण्युपपदे धातोरण्प्रत्ययः स्यात्। उपपदसमासः (२२) कुम्भं करोतीति कुम्भकारः। आदित्यं पश्यतीत्यादावनभिधानान्न। शीलिकामिभक्ष्याचरिभ्यो णः *। अणोऽपवादार्थं वार्त्तिकम्। मांसशीला। मांसकामा। मांसभक्षा। कल्याणाचारा। ईक्षिक्षमिभ्यां च *। सुखप्रतीक्षा। बहुक्षमा। कथं तर्हि गङ्गाधरभूधरादयः, कर्मणः शेषत्वविवक्षायां भविष्यन्ति।

## ह्वावामश्च। ३। २। २।

---

(२०) समभिहार इति भूयः सहचरादिति शेषः, यो हि भूयो यः क्रियां करोति स तत्र कौशलं लभते इति तस्य साधुकारित्वं गम्यते इत्यर्थः। साधुकारित्वोक्त्या बहुशो दुष्करणे न वुन्निति बोध्यम्।

(२१) अप्राप्तप्रार्थनमाशीः सा च प्रयोक्तृधर्मो न प्रत्ययार्थः, कर्त्तरि कृदिति (३२६८पृ०) कर्त्रर्थाभिधानादित्याशयेनाह आशीर्विषयार्थेत्यादि।

(२२) उपपदमतिङिति (पृ३१८पृ०) सूत्रेणेति शेषः। तत्र गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरित्युक्तत्वात्सैव समास इति बोध्यम्।

स्थ इति कप्रत्ययान्तस्यानुकरणं षष्ठ्यर्थे प्रथमा एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः । इत आरभ्य कर्मणि सुपीति द्वयमप्यनुवर्त्तते । तत्राकर्मकेषु सुपीत्यस्य सम्बन्धः ।

## तुन्दशोकयोः परिमृजापनुदोः । ३ । २ । ५ ।

तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् । आलस्यसुखाहरणयोरिति वक्तव्यम् * । तुन्दम्परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्त्ता । अलसादन्यत्र तुन्दपरिमार्ज्ज एव । यस्तु संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः । कप्रकरणे मूलविभुजादिभ्य २६) उपसंख्यानम् * । मूलानि विभुजति मूलविभुजो रथः आकृतिगणोऽयम । महीध्रः । कुध्रः । गिलतीति गिलः ।

## प्रे दाज्ञः । ३ । २ । ६ ।

दाज्ञपाज्ञानातेश्च प्रोपसृष्टात् कर्मण्युपपदे कः स्यात् । अगोऽग्रवादः । सर्वप्रदः । पथिप्रज्ञः । अनुपसर्गे ‡ इत्युक्तेः प्रादन्यस्मिन् सुपि न कः । गोसम्प्रदायः ।

## समि ख्यः । ३ । २ । ७ ।

गोसंख्यः ।

## गापोष्टक् । ३ । २ । ८ ।

---

(२६) मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिल आकृतिगणोऽयम् ।

‡ धातोऽनुपसर्गे इति (उ३२४५ ) । सूत्रे इति शेषः ।

अनुपसर्गाभ्यामाभ्यां टक् स्यात् कर्मण्युपपदे। सामगः सामगी। उपसर्गे तु सामसंगायः। पिबतेः सुराशीध्वोरिति वाच्यम्। सुरापी। शीधुपी। अन्यत्र क्षीरपा ब्राह्मणी सुराम्पाति रक्षतीति सुरापा।

हरतेरनुद्यमनेऽच्। ३। २। ९।

अंशहरः। अनुद्यमने किम् भारहारः। शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम्। शक्तिग्रहः। लाङ्गलग्रहः। सूत्रे च धार्य्यर्थे। सूत्रग्रहः। यस्तु सूत्रम् केवलमुपादत्ते न तु धारयति तत्राण्णेव। सूत्रग्राहः।

वयसि च। ३। २। १०।

उद्यमनार्थं सूत्रम्। कवचहरः कुमारः।

आङि ताच्छील्ये। ३। २। ११।

पुष्पाण्याहरति तच्छीलः पुष्पाहरः। ताच्छील्ये किम् भारहारः।

अर्हः ३। २। १२।

अर्हतेरच् स्यात् कर्मण्युपपदे। अणोऽपवादः। पूजार्हा ब्राह्मणी।

स्तम्बकर्णयो रमिजपोः। ३। २। १३।

हस्तिसूचकयोरिति वक्तव्यम्। स्तम्बे रमते स्तम्बेरमो

हस्ती । तत्पुरुषे कृतीति (प४६०पृ०) हलदन्तादिति (प४५८पृ०) वा ङेरलुक् । कर्णेजपः सूचकः ।

## शमि धातोः संज्ञायाम् । ३ । २ । १४ ।

शम्भवः । शंवदः । पुनर्धातुग्रहणम्बाधकविषयेऽपि प्रवृत्त्यर्थम् । अतो हेतुत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला ।

## अधिकरणे शेतेः । ३ । २ । १५ ।

खे शेते खशयः । पार्श्वादिषु[२७] उपसंख्यानम् * । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः । उत्तानादिषु कर्त्तृषु * । उत्तानः शेते उत्तानशयः । अवमूर्द्धशयः अवनतो मूर्द्धा यस्य स अवमूर्द्धा अधोमुखः शेते इत्यर्थः । गिरौ डश्छन्दसि * । गिरौ शेते गिरिशः । कथन्तर्हि "गिरिशमुपचचार प्रत्यहं सा सुकेशीति" गिरिरस्यास्ति इति विग्रहे (१३८पृ०) लोमादित्वाच्छः ।

## चरेष्टः । ३ । २ । १६ ।

अधिकरणे उपपदे । कुरुचरः कुरुचरी ।

## भिक्षासेनादायेषु च । ३ । २ । १७ ।

भिक्षाञ्चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम्

---

(२७) पार्श्व उदर पृष्ठ उत्तान अवमूर्द्ध पार्श्वादि

बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम्। लिपि-लिविशब्दौ पर्य्यायौ। संख्या- एककरः। द्विकरः। कस्का-दित्वात् (पृ६८९०)। अहस्करः। नित्यम् समासेऽनुत्तरपदस्थ-स्येति (पृ७५१०) षत्वम्। धनुष्करः। अरुष्करः। किंयत्तद्बहुषु कृञोऽज्विधानमिति * वार्त्तिकम्। किङ्करा। यत्करा। तत्-करा। हेत्वादौ टष्बाधित्वा परत्वादच्। पुंयोगे ङीप् किङ्करी।

*

## कर्मणि भृतौ। ३। २। २२।

कर्म्मशब्दे उपपदे करोतेष्ट स्यात् भृतौ। कर्म्मकरो भृतकः। कर्म्मकारोऽन्यः।

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु। ३। २। २३।

एषु कृञष्टो न। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकार इत्यादि।

## स्तम्बशकृतोरिन्। ३। २। २४।

व्रीहिवत्सयोरिति वक्तव्यम् *। स्तम्बकरिर्व्रीहिः। शकृत्क-रिर्वत्सः। व्रीहिवत्सयोः किम् स्तम्बकारः। शकृत्कारः।

## हरतेर्दृतिनाथयोः पशौ। ३। २। २५।

दृतिनाथयोरुपपदयोर्हञ इन् स्यात् पशौ कर्त्तरि। दृतिं हरतीति दृतिहरिः। नाथनासारज्जुम् हरतीति नाथ-हरिः। पशौ किम् दृतिहारः। नाथहारः।

फलेग्रहिरात्मम्भरिश्च ।३।२।२६।

फलानि गृह्णातीति फलेग्रहिः। उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते। आत्मानं बिभर्तीति आत्मम्भरिः। आत्मनो मुमागमः ष्ञ इन्। चात् कुक्षिम्भरिः। चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः। "अतितमाकरवमुदरम्भरय-श्चकोरा इति" मुरारिः।

एजेः खश् ।३।२।२८।

ण्यन्तादेजेः खश् स्यात्।

अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य। शित्त्वाच्छबादिः। जनम् एजयतीति जनमेजयः। वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः उपसंख्यानम्। वातमजा मृगाः।

खित्यनव्ययस्य ।६।३।६६।

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। ततो मुम्। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा माषाः। शर्धोऽपानशब्दः तं जहति इति विग्रहः। जहातिरन्तर्भावितण्यर्थः।

नासिकास्तनयोर्ध्माधेटोः ।३।२।२९।

अत्र वार्त्तिकम् (२९)। स्तने धेटो नासिकायां ध्मश्चेति

(२९) नासिकास्तनयोर्ध्माधेटोरित्यत्र [illegible] यथासंख्यनिराकरणार्थं वार्त्तिकमत्र पूर्वमिति स्तनेऽपि धेटो ग्रहणम्।

वाच्यम् * । स्तनन्धयतीति स्तनन्धयः । घेटित्त्वात् स्तनन्धयी (२०) । नासिकन्धमः । नासिकन्धयः ।

**नाडीमुष्ट्योश्च । ३ । २ । ३० ।।**

एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् । यथासंख्यं नेष्यते । नाडिन्धमः नाडिन्धयः । मुष्टिन्धमः मुष्टिन्धयः । घटीखारीखरीषूपसंख्यानम् * । घटिन्धमः । घटिन्धयः । इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी ।

**उदि कूले रुजिवहोः । ३ । २ । ३१ ।**

उत्पूर्वाभ्याम् (२१) रुजिवहिभ्याम् कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः ।

**वहाभ्रे लिहः । ३ । २ । ३२ ।**

वहः स्कन्धस्तं लेढीति वहंलिहो गौः । मुदादित्वाच्छपो लुक् । खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः ।

**परिमाणे पचः । ३ । २ । ३३ ।**

प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ।

---

(२०) टित्त्वस्यावयवेऽचरितार्थत्वात् प्रत्ययान्त एवावकाश इति भावः । तत्रापि खश्प्रत्ययान्तादेव घेटो ङीप् नान्यस्मादिति हरदत्तादयः । मनो० ।

(२१) उदीत्यस्य सप्तम्यन्तत्वे कूलपदस्येवोपपदत्वं स्यात् ततश्च नाडीमुष्ट्योरिव यथासंख्यप्रसङ्गापत्तिरित्यत उदीत्यत्र सप्तमीं पञ्चमीपरतया व्याचष्टे उत्पूर्वाभ्यामिति रुजिवहोरित्यत्र षष्ठी पञ्चम्यर्थे ।

र्थमिदम् (२४)। मितङ्गमो हस्ती ‚ विहायसो विह इति वाच्यम् *। खच डिद्वा वाच्य: *। विहङ्गम: विहङ्ग:। भुजङ्गम: भुजङ्ग:।

## द्विषत्परयोस्तापे:। ३। २। ३८।

खच् स्यात्।

## खचि ह्रस्व:। ६। ४। ९४।

खच्परे णौ उपधाया ह्रस्व: स्यात्। द्विषन्तम्परं वा तापयतीति द्विषन्तप:। परन्तप:। षटीग्रहणात् (उ११।पृ०वा०) लिङ्गविशिष्टपरिभाषा अनित्या। तेनेह न द्विषतीन्तापयतीति द्विषतीताप:।

## वाचि यमव्रते। ३। २। ४०।

वाक्शब्दे उपपदे यमे: खच् स्याद्व्रते गम्ये।

## वाचंयमपुरन्दरौ च। ६। ३। ६९।

पाक्पुरोरमन्तत्वन्निपात्यते। वाचंयमो मौनव्रती। व्रते किम् अशक्तयादिना वाचं यच्छतीति वाग्याम:।

## पू:सर्व्व योर्द्दारिसहो:। ३। २। ४१।

पुरन्दारयतीति पुरन्दर:। सर्वंसह:। सञ्ज्ञयहणमसंज्ञार्थम्। भगे च दारेरिति काशिका। बाहुलकेन लब्धमिदमित्याहु:। भगन्दारयतीति भगन्दर:।

---

(२४) संज्ञायान्तु गमचेति (उ१२५पृ०) सूत्रेण सिद्धमिति भाव:।

सर्वकूलाभ्रकरीषेषु कषः । ३ । २ । ४२ ।

सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो वायुः। करीषङ्कषा वात्या।

मेघर्त्तिभयेषु कृञः । ३ । २ । ४३ ।

मेघङ्करः। ऋतिङ्करः। भयङ्करः। भयशब्देन तदन्तविधिः। अभयङ्करः।

क्षेमप्रियमद्रेऽण् च । ३ । २ । ४४ ।

एषु कृञोऽण् स्यात्। चात् खच्। क्षेमङ्करः क्षेमकारः। प्रियङ्करः प्रियकारः। मद्रङ्करः मद्रकारः। वेति वाच्येऽण्वचनं हेत्वादिषु टो माभूदिति। कथन्तर्हि "क्षमाकराः क्षेमकराः" इति कर्मणः शेषत्वविवक्षायां पचाद्यच्।

आशिते भुवः करणभावयोः । ३ । २ । ४५ ।

आशितशब्दे उपपदे भवतेः खच्। आशितो (२१) भवत्यनेनाशितम्भव ओदनः। आशितस्य भवनम् आशितम्भवम्।

संज्ञायां भृतॄवृजिधारिसहितपिदमः । ३ । २ । ४६ ।

विश्वम् बिभर्त्तीति विश्वम्भरः। विश्वम्भरा। रथन्तरम् साम। रथेन तरतीति व्युत्पत्तिमात्रं न त्ववयवार्थो-

---

(२१) [illegible] ।

युगमः। पतिंवरा कन्या। शत्रुंजयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः। दमिः शमनायान्तेन सकर्मकः (३।४।१०) इत्युक्तम्। मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः।

गमश्च। ३। २। ४७।

सुतङ्गमः।

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः। ३। २। ४८।

संज्ञायामिति निवृत्तम्। एषु गमेर्डः स्यात्। डित्वसामर्थ्यादभस्यापि टेर्लोपः। अन्ते गच्छतीत्यन्तग इत्यादि। सर्वत्र-पन्नयोरुपसंख्यानम् *। सर्वत्रगः। पन्नम्पतितङ्गच्छतीति पन्नगः। पन्नमिति पद्यतेः क्तान्तम् क्रियाविशेषणम्। उरसो लोपश्च *। उरसा गच्छतीत्युरगः। सुदुरोरधिकरणे *। सुखेन गच्छत्यत्र सुगः। दुर्गः। अन्यत्रापि दृश्यते इति वक्तव्यम् *। ग्रामगः। डे च विहायसो विहादेशो वक्तव्यः। *। विहगः।

आशिषि हनः। ३। २। ४९।

शत्रुंवध्याच्छत्रुहः। आशिषि किम् शत्रुघातकः। दारा-वाहनोऽणन्तस्य च टः संज्ञायाम् *। दारुशब्दे उपपदे आङ्पूर्वाद्धन्ते रण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वा

हन्तेः टक् स्यात् अक्तौ द्योत्यायाम् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कवाटघ्नश्चौरः । कपाटेति (३८) पाठान्तरम् ।

## पाणिघताडघौ शिल्पिनि । ३ । २ । ५५ ।

हन्तेष्टक् टिलोपो घत्वञ्च निपात्यते पाणिताडयोरुपपदयोः । पाणिघः । ताडघः । शिल्पिनि किम् पाणिघात । ताडघातः । राजघ उपसंख्यानम् । राजानं हन्ति राजघः ।

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । ३ । २ । ५६ ।

एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम् । अच्वौ किम् आढ्यी कुर्वन्त्यनेन इह प्रतिषेधसामर्थ्यात् (३९) ल्युडपि नेति काशिका । भाष्यमते तु ल्युट् स्यादेव । अच्वावित्युत्तरार्थम् ।

## कर्त्तरि (४०) भुवः खिष्णुच्खुकञौ ।३।२।५७।

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवतीति आढ्यम्भविष्णुः । आढ्यम्भावुकः । सुभगोऽनुदके

---

(३८) क शिरः पाटयति प्रविशतीति कपाट, कुत्सितमटतीति कवाट कयश्चोष्णा इत्यत्र (पृ४७६पृ०) योगविभागात् कादेश इति । मनो० ।

(३९) आढ्यीकरणमिति ल्युट्ख्युनोस्तुल्य रूप न च ख्युनि मुमागमौ च्विप्रत्ययस्याव्ययत्वेन च्व्यन्तस्याव्ययतया अनव्ययस्येति (७२२०पृ०सू०) पर्युदासात् ।

(४०) कर्त्तरि कृदिति (७२९८पृ०) स्थिते पुन कर्त्तरीतिग्रहणं करणनिवृत्त्यर्थम् खिष्णोरिकारकरण व्यर्थमिटैव रूपसिद्धे । मनो० ।

विट् (४५) स्यात्। आममत्ति आमात्। शस्यात्। अनत्ति किम् अन्नादः।

## क्रव्ये च। ३। २। ६९।

अदेर्विट् पूर्वेण सिद्धे वचनमणबाधनार्थम्। क्रव्यात् आममांसभक्षकः। कथन्तर्हि "क्रव्यादोऽस्रप आशर" इति पक्वमांसशब्द उपपदेऽण् उपपदस्य क्रव्यादेशः पृषोदरादित्वात्।

## दुहः कप् घश्च। ३। २। ७०।

कामदुघा।

## अन्येभ्योऽपि दृश्यन्ते। ३। २। ७५।

छन्दसीति निवृत्तं मनिन् क्वनिप् वनिप् विच् एते प्रत्ययाः धातोः स्युः।

## नेड् वशि कृति। ७। २। ८।

वशादेः कृत इण् न स्यात्। शॄ—सुशर्मा। प्रातरित्वा।

## विड्वनोरनुनासिकस्यात्। ६। ४। ४१।

अनुनासिकस्य आत्स्यात्। विजायत इति विजावा। ओण्—अवावा। विच्। रोट्। लेट्। सुगण्।

## क्विप् च। ३। २। ७६।

---

(१) जनसनखनक्रमगमो विडित्यतो (३।२।६७) विडित्यनुवर्त्तते।

यात् क्विप्। संख्यः संख्याः। चक्षिधातोः (अ२।२।४०) इत्य-
यम्भावाधिनं सूत्रम्।

## सुप्यजातौ णिनिस्ताच्छील्ये। ३। २। ७८।

अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये। उष्ण-
भोजी शीतभोजी। अजातौ किम् ब्राह्मणानामन्त्रयिता।
ताच्छील्ये किम् उष्णं भुङ्क्ते कदाचित् इह वृत्तिकारेणोप-
सर्गभिन्न एव सुपि णिनिरिति व्याख्याय उत्प्रतिभ्या-
माङि सर्त्तेरुपसंख्यानमिति पठितम् हरदत्तमाधवादिभिश्च
तदेवानुसृतम् एतच्च भाष्यविरोधादुपेक्ष्यम् प्रसिद्धश्चोप-
सर्गेऽपि णिनिः "स बभूवोपजीविनाम्" "अनुयायिवर्गः"
"पतत्यधो धाम विसारि" "न वञ्चनीया प्रभवोऽनुजीविभिरि"-
त्यादौ। साधुकारिण्युपसंख्यानम् *। ब्रह्मणि वदः *।
अताच्छील्यार्थं वार्त्तिकद्वयम्। साधुदायी। ब्रह्मवादी।

## कर्त्तर्य्युपमाने। ३। २। ७९।

णिनिः स्यात्। उपपदार्थः कर्त्ता प्रत्ययार्थस्य कर्त्तुरुपमा
नम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अता-
च्छील्यार्थं आरम्भं च सूत्रम्। कर्त्तरि किम् अपूपानिव
भक्षयति माषान्। उपमाने किम् उष्ट्रः क्रोशति।

## व्रते। ३। २। ८०।

णिनिः स्यात्। स्थण्डिलशायी।

आत्मानं श्रीमन्यं कुलम्। भाष्यकारवचनात्(५३) श्रीयन्दस्य ह्रस्वः मुममोरभावश्च।

भूते। ३। २। ८४।

अधिकारोऽयम्। वर्त्तमाने लडिति (३०पृ०) यावत्।

करणे यजः। ३। २। ८५।

करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्त्तरि। सोमेनेष्टवान् (५४) सोमयाजी। अग्निष्टोमयाजी (५५)।

कर्म्मणि हनः। ३। २। ८६।

पितृव्यघाती। कर्म्मणीत्येतत्सहे चेति(३२४५पृ०)यावत् अधिक्रियते

ब्रह्मभ्रूणवृत्रेषु क्विप्। ३। २। ८७।

एषु कर्म्मसूपपदेषु हन्तेर्भूते क्विप् स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। क्विप् चेत्येव (३११८पृ०) सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव हन्तेरेव भूते एव क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियम इति भाष्यम् (५६)।

---

(५३) यथा प्रत्यादयः शब्दाः प्रयोगात् क्रियां वर्त्तन्ते प्रष्ठी गच्छतीति तथेह श्रीयन्द्रः परित्यक्तस्वलिङ्गं क्लीबं सत् कुले वर्त्तत इति भाष्यम्।

(५४) सोमेन लताविशेषात्मकद्रव्येण यागं कृतवानित्यर्थः।

(५५) अग्निष्टोमाख्येन यागेनापूर्वं भावितवानिति बोधभेदः।

(५६) धातुकारकौ हि नेह शब्दे श्रुतौ किन्तु प्रकरणाल्लभ्यौ तयोरुपरोधो न न्याय्यः उपपदप्रत्यययोस्तु श्रुतत्वादुपरोधो न्याय्य एव। एवं भाष्ये न्यायोपदर्शनाद् इत्थियञ्च उपेक्ष्य इति कैयटः। मनो०।

सुकर्मपापमन्त्रपुण्येषु कृञः । ३ । २ । ८९ ।

सु कर्मादिषु च कृञः क्विप् स्यात् । त्रिविधोऽत्र नियम इति काशिका । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । क्विबेवेति नियमात्कर्म कृतवानित्यत्राण् न । कृञ एवेति नियमान्मन्त्रमधीतवान्मन्त्राध्याय । अत्र न क्विप् । भूत एवेति नियमात् मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप् । स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत । भाष्यकृत् ।

सोमे सुञः । ३ । २ । ९० ।

सोमसुत् । चतुर्विधोऽत्र नियम इति काशिका । एवमुत्तरसूत्रेऽपि ।

अग्नौ चेः । ३ । २ । ९१ ।

अग्निचित्

कर्मण्यग्न्याख्यायाम् । ३ । २ । ९२ ।

कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यात् अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः श्येनचित्

कर्मणीनिर्विक्रियः । ३ । २ । ९३ ।

कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात् । कुत्सितग्रहणं कर्तव्यम् । सोमविक्रयी । घृतविक्रयी

दृशेः क्वनिप् । ३ । २ । ९४ ।

कर्मणीति भूत इत्येव । पारं दृष्टवान् पारदृश्वा ।

राजनि युधिकृञः । ३ । २ । ९५ ।

क्वनिप् स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ।

सहे च । ३ । २ । ९६ ।

कर्मणीति निवृत्तम् । सहयुध्वा । सहकृत्वा ।

सप्तम्यां जनेर्डः । ३ । २ । ९७ ।

सरसिजम् । मन्दुरायां जातो मन्दुरजः । ङ्यापोरिति (पृ० ६८४०) ह्रस्वः ।

पञ्चम्यामजातौ । ३ । २ । ९८ ।

जातिशब्दवर्जिते पञ्चम्यन्त उपपदे जनेर्डः स्यात् । संस्कारजः । अदृष्टजः ।

उपसर्गे च संज्ञायाम् । ३ । २ । ९९ ।

"प्रजा स्यात् सन्ततौ जने" ।

अनौ कर्मणि । ३ । २ । १०० ।

अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात् । पुमांसमनुरुध्य जाता पुमनुजा (५७) ।

---

(५७) इह जनिः सकर्मकः अनुरोधविशिष्टजननवृत्तित्वात् ।

## अन्येष्वपि दृश्यते। ३। २। १०१।

अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजः। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा।

## क्तक्तवतू निष्ठा। १। १। २६।

एतौ निष्ठासंज्ञौ स्तः।

## निष्ठा। ३। २। १०२।

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति (का० ८८४) भावकर्मणोः क्तः। कर्तरि कृदिति (का० ८८३) कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्।

## निष्ठायामण्यदर्थे। ६। ४। ६०।

ण्यदर्थो भावकर्म ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात्।

## क्षियो दीर्घात्। ८। २। ४६।

दीर्घात् क्षियो निष्ठातस्य नः स्यात्। क्षीणवान्। भावकर्मणोस्तु क्षितः कामो मया। श्र्युकः किति (का० ८७४)। श्रितः। श्रितवान्। भूतः। भूतवान्। वृतः। ऊर्णोर्नुवद्भावो वाच्यः। तेन एकाच्त्वान्नेट्। ऊर्णुतः। युतः। हुतः।

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः। ८। २। ४२।

रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात्। निष्ठापेक्षया

पूर्वस्य धातोरीकारस्य च । मॄ कॄत ॠत् (उ०।०पृ०)। इपरः। चत्वम्। गीर्णः। बहिरङ्गत्वेन इत्वेरसिद्धत्वान्नेह। कृत-स्यापत्यं कार्त्तिः। भिन्नः। छिन्नः।

## संयोगादेरातो धातोर्यण्वतः। ८। २। ४३।

निष्ठातस्य नः स्यात्। द्राणः। स्त्यानः। ग्लानः।

## ल्वादिभ्यः। ८।.२। ४४।

एकविंशतेर्लूञादिभ्यः (५८) प्राग्वत्। लून। ज्या-प्रहिज्या (उ०६पृ०)। जीनः। दुग्वोर्दीर्घश्च *। दु गतौ—दून। टुदु उपताप इत्ययन्तु न गृह्यते सानुबन्धत्वात्। "मृदुतया दुत-येति" माघः। गून। पूञो विनाशे *। पूना यवाः विनष्टा इत्यर्थः। पूतमन्यत्। सिनोतेर्ग्रासकर्मकर्त्तृकस्य *। सिनो ग्रासः (५९)। ग्रासेति किम् सिता पाशेन सूकरी। कर्मक-र्त्तृकस्येति किम् सितो ग्रासो देवदत्तेन।

## ओदितश्च। ८। २। ४५।

भुजोभुग्नः। टु ओ श्वि—उच्छून। ओ, हाक—प्रहीणः। स्वादय ओदित इत्युक्तम् (उ।२५पृ०)। सूनः। सूनवान्। दूनः। दूनवान्। ओदित्सध्ये डीङः पाठसामर्थ्यान्नेट्। उड्डीनः।

---

(५८) प्वादयो द्वाविंशतिः क्र्यादौ पठितास्तन्मध्ये पूञं विहाय ल्वादयो ज्ञेया। एतत्पुस्तके १६५ १६६ १६७ पृष्ठेषु द्रष्टव्या।

(५९) पिण्डीक्रियमाणो ग्रासो दध्यादिमिश्रणादिना यदा कल्लोऽङ्कुर-यदा कर्म्म च एव कर्तृत्वं तत्रैवेदं प्रवर्त्तते इति बोध्यम्।

द्रवमूर्त्तिस्पर्शयोः श्यः । ६ । १ । २४ ।

द्रवस्य मूर्त्तौ काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्नि-ष्ठायाम् ।

श्योऽस्पर्शे (९०) । ८ । २ । ४७ ।

श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । हल इति दीर्घः । शीनं घृतम् । अस्पर्शे किं शीतञ्जलम् । द्रवमूर्त्तिस्पर्शयोः किम् संश्यानो वृश्चिकः शीतात् सङ्कुचित इत्यर्थः ।

प्रतेश्च । ६ । १ । २५ ।

प्रतिपूर्वस्य श्यः सम्प्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः ।

विभाषाऽभ्यवपूर्वस्य । ६ । १ । २६ ।

श्यः सम्प्रसारणं वा स्यात् । अभिश्यानम् अभिशीनम् घृतम् अवश्यानोऽवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न समवश्यानः ।

अञ्चोऽनपादाने । ८ । २ । ४८ ।

अञ्चो निष्ठातस्य नः स्यात् अनपादाने ।

यस (९१) विभाषा । ७ । २ । १५ ।

यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इट् न स्यात् ।

(९०) [illegible]

(९१) [illegible]

उदितो वेति (७।२।५६) क्त्वायां वेट्त्वादिह नेट्। समुन्नः। अनपादाने किम् उदत्त(६२)मुदकं कूपात्। णत्वस्यासिद्धत्वात् व्रश्चेति (८।२।३६) षत्वे प्राप्ते। निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः *। वृक्णः। वृक्णवान्।

## परिस्कन्दः प्राच्यभरतेषु। ८। ३। ७५।

पूर्वेण मूर्द्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। प्राच्येति किम् परिष्कन्दः—परिस्कन्दः। परेश्चेति (८।३।७४) विकल्पः। स्तन्भेरिति (८।३।६७) षत्वे प्राप्ते प्रतिस्तब्धनिस्तब्धौ च *। अत्र षत्वं न स्यात्।

## दिवोऽविजिगीषायाम्। ८। २। ४९।

दिवो निष्ठातस्य नः स्यादविजिगीषायाम्। द्यूनः। विजिगीषायान्तु द्यूतम् (६३)।

## निर्वाणोऽवाते। ८। २। ५०।

अवाते इति छेदः। निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत् कर्त्ता न। निर्वाणोऽग्निर्मुनिर्वा। वाते तु निर्वातो वातः।

## शुषः कः। ८। २। ५१।

निष्ठात इत्येव। शुष्कः।

## पचो वः। ८। २। ५२।

पक्वः।

---

(६२) उदस्तगृहीतमित्यर्थः धातूनामनेकार्थत्वात्।

(६३) द्यूतमिति विजिगीषया हि तत्राक्षाः पात्यन्त इति गम्यते विजिगीषा।

प्रफुल्लमिति" फुल्ल विकसने पचाद्यच् । क्तवन्तु (६४) फुल्लतादिनिवृत्त्यर्थम् । उत्फुल्लसंफुल्लयोरुपसंख्यानम् * ।

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् । ८ । २ । ५६ ।

एभ्यो निष्ठातस्य नो वा । नुन्न:—नुत्त । विद् विचारणे रौधादिक एव गृह्यते उन्दिना परेण साहचर्य्यात् । विन्न:—वित्त: । वेत्तेस्तु विदित: (६५) । विद्यतेर्विन्न: । उन्नो ।

## श्वीदितो निष्ठायाम् । ७ । २ । १४ ।

श्वयतुरीदितश्च निष्ठाया इण् न । उन्न:—उत्त: । त्रात:—त्रात: । घ्राण:—घ्रात: । ह्रीण:—ह्रीत: ।

## न ध्याख्यापृमूर्च्छिमदाम् । ८ । २ । ५७ ।

एभ्यो निष्ठातस्य नत्वम् । ध्यात: । ख्यात: । पूर्त: । राल्लोप: (उ०।८४) । मूर्त्त: । मत्त: ।

## वित्तो भोगप्रत्ययोः । ८ । २ । ५८ ।

विन्दतेर्निष्ठान्तस्य निपातोऽयम्भोग्ये प्रतीते (६६) चार्थे । वित्तं

---

(६४) अनुपसर्गात् फुल्लेत्यादि सूत्र फुल्ल विकसन इत्यस्मात् पचाद्यचा सिद्धावपि निष्ठाया फुल्लतरूपनिवृत्त्यर्थमित्यर्थः ।

(६५) वेत्तेर्विदित तथा च भाष्यम् ।

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।

वित्तेर्विन्नश्च विन्नश्च भोगे वित्तश्च विद्यतेरिति ॥

(६६) भोगप्रत्ययशब्दौ कर्मसाधनाविव्याश्रयेन आचष्टे भोग्ये प्रतीते चेति ।

ऽनम् । विस्त पुरुषः । धनयोः किम् विम: । विभाषा गम-
ऽनेति (७२६५सू०) असौ वेट्त्वादिह नेट् ।

भित्तं शकलम् । ८ । २ । ५९ ।

भेद्यमन्यत् ।

ऋणमाधमर्ण्ये । ८ । २ । ६० ।

ऋधातोः क्तस्य तकारस्य नत्वं निपात्यते आधमर्ण्ये (१) व्यव
हारे । ऋतमन्यत् ।

स्फायः स्फी निष्ठायाम् । ६ । १ । २२ ।

स्फीतः ।

क्लिशः क्त्वानिष्ठयोः ... डीङ्निष्ठायाम् । ७ । २ । ४७ ।

निर्. कुषो निष्ठाया इट् स्यात् । यस्य विभाषेति (...सू०)
निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः ।

वसतिक्षुधोरिट् । ७ । २ । ५२ ।

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । क्षुधितः ।

अञ्चेः पूजायाम् । ७ । २ । ५३ ।

---

(१) अधम ऋणमहस्य यस्य सोऽधमर्णस्तस्य भावः आधमर्ण्यं तेन च
... ... ... ... ... ... ...
... इति पृ ... निर्देशात् । अवो० ।

फाण्टमनायाससाध्यः कषायविशेषः (७३)। माधवस्तु नवनीतभावात् प्रागवस्थापन्नं द्रव्यम्फाण्टमिति वेदभाष्ये (७४) आह। वाढं भृशम्। अन्यत्र तु क्षुभितम्। क्षुब्धो राजेति त्वागमशास्त्रस्यानित्यत्वात्। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छितम्। विरेभितम्। फाणितम्। वाहितम्।

## धृषिशसी वैयात्ये। ७। २। १९।

एतौ निष्ठायामविनये (७५) एवानिटौ स्तः। धृष्टः। विशस्तः। अन्यत्र। धर्षितः। विशसितः। भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति (७६)। अतएव नियमार्थमिदं सूत्रमिति वृत्तिः। धृषेरादित्त्वे फलञ्चिन्त्यमिति हरदत्तः। माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाह। धृष्टम्—धर्षितम्। प्रधृष्टः—प्रधर्षितः।

## दृढः स्थूलबलयोः। ७। २। २०।

स्थूले बलवति च निपात्यते। दृह दृहि वृद्धौ। तस्येडभावः।

(७३) कषायमौषधजातमुष्णोदके प्रक्षिप्य सद्यो [illegible] यत्पीयते तत् फाण्टम्।

(७४) "तद्वै नवनीतं भवति घृतं देवानां फाण्टं मनुष्याणामिति" शतपथ श्रुतिव्याख्यावसरमिति शेषः।

(७५) निष्ठायां [illegible] निष्ठायामनयोरादितश्च (७।२।१६।) [illegible] विभाषेति (७।२।१७।) च [illegible] सिद्धे नियमार्थं [illegible] वैयात्ये एवानिट्त्वं [illegible]। विरुद्धं यानं वियातं विनीतस्य भावो वैयात्यमित्यर्थः।

(७६) विभाषा भावादिकर्मणोरिति (७।२।१७।) विकल्पे प्राप्ते [illegible] नित्य [illegible] इति।

तस्य ढत्वम्। हस्य लोपः। इडभा॰ नलोपश्च। दृंहितः। दृंहितोऽन्यः।

**प्रभौ परिवृढः। ७। २। २१।**

वृह वृहि वृद्धौ निपातनमस्मात्स्वत। परिवृंहितः। परिवृंहि-तोऽन्यः।

**कृच्छ्रगहनयोः कषः। ७। २। २२।**

कषो निष्ठाया इण् न स्यादेतयोरर्थयोः। कष्ट दुःख तत्का-रणञ्च। "स्यात् कष्टं कृच्छ्रमाभीलम्"। कष्टो मोहः (११)। कष्टं शास्त्रम् दुरवगाहमित्यर्थः। कषितमन्यत्।

**घुषिरविशब्दने। ७। २। २३।**

घुषेर्निष्ठायामनिट् स्यात्। घुष्टा रज्जुः। अविशब्दने किम् घुषितम् वाक्यम् शब्देन प्रकटीकृताभिप्रायमित्यर्थः।

**अर्द्देः संनिविभ्यः। ७। २। २४।**

एतत्पूर्व्वादर्द्देर्निष्ठाया इण् न स्यात्। समर्णः। न्यर्णः। व्यर्णः। अर्द्दितोऽन्यः।

**अभेश्चाविदूर्य्ये। ७। २ २५।**

अभ्यर्णम् नातिदूरम् आसन्नम् वा। अभ्यर्द्दितमन्यत्।

**णेरध्ययने वृत्तम्। ७। २। २६।**

---

(११) कष्टो मोहो दुःखहेतुरित्यर्थः।

विस्मितप्रतिघातयोश्च। हृष्टं-हृषितं लोम। विस्मितं प्रतिहतं वेत्यर्थः। अन्यत्र तु हृषु अलीके उदित्वान्निष्ठायां नेट्। हृष तुष्टौ इट्।

**अपचितश्च। ७।२।३०।**

चायतेर्निपातोऽयं वा। अपचितः अपचायितः।

**प्यायः पी। ६।१।२८।**

पी वा स्यान्निष्ठायाम्। व्यवस्थितविभाषेयम्। तेन स्वाङ्गे नित्यम्। पीनं मुखम्। अन्यत्र। प्यानः-पीनः स्वेदः। सोपसर्गस्य न। प्रप्यानः। आङ्पूर्वस्यान्धूधसोः स्यादेव। आपीनोऽन्धुः। आपीनमूधः।

**ह्लादो निष्ठायाम्। ६।४।९५।**

ह्रस्वः स्यात्। प्रह्लन्नः।

**द्यतिस्यतिमास्थामित्ति किति। ७।४।४०।**

एषामिकारोऽन्तादेशः स्यात्तादौ किति। इत्त्वं दद्भावस्यापवादः। दितः। सितः। मा माङ् मेङ् मितः। स्थितः।

**शाच्छोरन्यतरस्याम्। ७।४।४१।**

शितः-शातः। छितः छातः। व्यवस्थितविभाषात्वाद् व्रतविषये श्यतेर्नित्यम्। संशितं व्रतम्। सम्यक् सम्पादितमित्यर्थः। संशितो ब्राह्मणः व्रतविषयकयत्नवानित्यर्थः।

दधातेर्हिः। ७। ४। ४२।

तादौ किति। अभिहितम्। विहितम्।

दो दद्घोः। ७। ४। ४६।

घुसंज्ञकस्य दा इत्यस्य दथ् (८०) स्यात्तादौ किति। चर्त्वम्। दत्तः। घोः किम् दातः। तान्तो वायमादेशः। नचैव विदत्तमित्यादावुपसर्गस्य इको इति दीर्घापत्तिः. तकारादौ तद्विधानात्। दान्तो वा धान्तो वा। अथ दान्तत्वे निष्ठानत्वम् धान्तत्वे झषस्तथोर्धोऽध इति (७४०सू०) धत्व मत्र सन्निपातपरिभाषाविरोधात्।

अच उपसर्गात्तः। ७। ४। ४७।

अजन्तादुपसर्गात् परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति। चर्त्वम्। प्रत्तम्। अवत्तम्।

'अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि।

सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते"।

अमरव्याख्याप्रामाण्यम्।

दस्ति। ६। ३। १२४।

इगन्तोपसर्गस्य दीर्घः स्यादादेशो यस्तकारस्तदादावुत्तरपदे। खरि चेति (५६-सू०) चर्त्वमाश्रयात् (८१) वीत्तम्। नीत्तम्। सूत्तम्।

---

(८०) तान्ते दोषो दीर्घत्वं स्यात् दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो भष्-प्रसिद्ध्यान्तोऽदोषस्तस्मात् थान्त एवायमादेशः दथ् इति।

(८१) चर्त्वस्यासिद्धत्वात् दादेशतकारो नाश्रीयते खरि च आश्रयादिति तकारो (५५७सू०) इत्युक्तं प्रति समाहितमर्थं।

**कपिष्ठलो गोत्रे । ८ । ३ । ९१ ।**

कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः । गोत्रे किम् कपीनां स्थलं कपिस्थलम् ।

**विकुशमिपरिभ्यः स्थलम् । ८ । ३ । ९६ ।**

एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ।

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च । ३ । ४ । ७२ ।**

एभ्यः कर्त्तरि क्तः स्यात् भावकर्मणोश्च । गङ्गां गतः । ग्रामं प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे प्राप्ता गङ्गा तेनेत्यादि ।

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । ३ । ४ । ७६ ।**

एभ्योऽधिकरणे क्तः स्यात् । चाद्यथाप्राप्तम् । ध्रौव्यं स्थैर्यम् ।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥ ८४ ॥

पक्षे आसेरकर्मकत्वात् कर्त्तरि भावे च । आसितो

(८४) अधिकरणवाचिनश्चेति प० २ सू०, निष्ठायाः कर्त्तरि षष्ठी ।

मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च । प्रमाणमिति यातः । तेनेदं यातम् । भुजः कर्मणि । धन-केनेदं भुक्तम् । कथं भुक्ता ब्राह्मणाः ? इति भुक्त ८५ मस्मि एषामिति मत्वर्थीयोऽच् । वर्तमाने इत्यधिकृत्य ।

## ञीतः क्तः । ३ । २ । १८७ ।

ञिक्ष्विदा । क्ष्विण्णः ञिइन्धी इद्धः ।

## मतिबुद्धिपूजार्थेभ्यश्च । ३ । २ । १८८ ।

मतिरिहेच्छा बुद्धेः पृथगुपादानात् । राज्ञां मत इष्टः तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यादि ८६ ।

## नपुंसके भावे क्तः । ३ । ३ । ११४ ।

क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । जल्पितम् । शयितम् । हसितम् ।

## सुयजोर्ङ्वनिप् । ३ । २ । १०३ ।

---

(८५) भोजनमेषामस्तीति तत्र क्तो दुर्लभ इत्याशङ्क्याभ्यन्तराद् भुक्तमिति ।

(८६) "शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः" ॥

सुञोर्यजेश्च ङ्वनिप् स्याद्भूते। सुत्वा सुत्वानौ। यज्वा। यज्वानौ।

जीर्य्यतेरतृन्। ३। २। १०४।

भूत इत्येव। जरन्। जरन्तौ। जरन्तः। वासरूपन्यायेन निष्ठापि। जीर्णः। जीर्णवान्।

छन्दसि लिट्। ३। २। १०५।

लिटः कानज्वा। ३। २। १०६।

क्वसुश्च। ३। २। १०७।

इह भूतसामान्ये छन्दसि लिट् तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु बहुलम्प्रयुञ्जते। "तस्थिवांसं नगरोपकण्ठे"। "श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इत्यादि।

वस्वेकाजाद्घसाम्। ७। २। ६७।

कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् नान्येषाम्। एकाच्। आदिवान्। आत्। ददिवान्। जक्षिवान्। एषां किम् बभूवान्।

भाषायां सदवसश्रुवः। ३। २। १०८।

सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्। तस्य च नित्यं क्वसुः। "निषेदुषीमासनबन्धधीरः"। "अध्युषितस्तस्यौ सभवक्तमनस्य" शुश्रुवान्।

### उपेयिवाननाश्वाननूचानश्च ।३।२।१०९।

एते निपात्यन्ते । उपपूर्वादिणो भाषायामपि भूतमात्रे लिट् तस्य नित्यं क्वसुः । इट् । उपेयिवान् । "उपेयुषः स्वामपि मूर्त्तिमग्र्याम्" । उपेयुषी । उपेत्यविवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । "छूतस्य छूतैरनाशुष इति" भारविः । अनुपूर्वाद्वचेः कर्त्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः ।

### विभाषा गमहनविदविशाम् ।७।२।६८।

एभ्यो वसोरिड् वा । जग्मिवान् जगन्वान् । जघ्निवान्-जघन्वान् । विविदिवान् - विविद्वान् । विविशिवान् - विविश्वान् । विदिना साहचर्याद्विन्दतेर्ग्रहणम् । वेत्तेस्तु विविद्वान् । नेड्वशि कृतीति ७।२।८ इण्निषेधः । दृशेश्च । ददृशिवान्-ददृश्वान् ।

### लटः शतृशानचावप्रथमासमानाधिकरणे (८७) ।३।२।१२४।

अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । पचादि । पच-न्तं चैत्रं पश्य ।

### आने मुक् ।७।२।८२।

(८७) आदेशयोः प्रथमासामानाधिकरण्यपर्युदासात् क्वाचित् वचारे तत्सामानाधिकरण्ये स्यात इति सर्वत्र शब्दार्थसंज्ञा स्यात् ।

**ईदासः। ७। २। ८३।**

आसः परस्यानस्य ईत् स्यात्। आदेः परस्य (१।१।५४)। आसीनः।

**विदेः शतुर्वसुः (१०)। ७। १। ३६।**

वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात्। विदन् विद्वान्। विदुषी

**तौ सत्। ३। २। १२७।**

तौ शतृशानचौ सत्संज्ञौ स्तः।

**लृटः सद्वा। ३। ३। १४।**

व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये, प्रत्ययोत्तरपदयोः सम्बोधने, लक्षणहेत्वोश्च नित्यम्। करिष्यन्तं करिष्यमाणम् पश्य। करिष्यतोऽपत्यं कारिष्यतः। करिष्यद्भक्तिः। हे करिष्यन्। अर्जयिष्यन्वसति। प्रथमासमानाधिकरणेऽपि क्वचित्। करिष्यति करिष्यन्।

**पूङ्यजोः शानन्। ३। २। १२८।**

वर्त्तमान। पवमान। यजमान।

**ताच्छील्यवयोवचनशक्तिषु चानश्। ३। २। १२९।**

---

(१०) स्थानिवत्त्वादेव सिद्धे पुनर्वसोर्ग्रहणं [illegible] समानार्थानित्यस्य (प० ७४०) सामान्येन क्वसोरपि ग्रहणार्थम्। अत एव "विदुषा त्वया कृतमिति" सिद्धम्।

एषु शीलादिषु कर्त्तरि चानश्। भोगं भुञ्जानः। कवचं बिभ्राणः। शत्रुं निघ्नानः।

## इङ्धार्य्योः शत्रकृच्छ्रिणि। ३। २। १३०।

धातोः शता स्यादकृच्छ्रिणि कर्त्तरि। अधीयन्। धारयन्। अकृच्छ्रिणि किम् कृच्छ्रेणाधीते। धारयति।

## द्विषोऽमित्रे। ३। २। १३१।

द्विषन् शत्रुः।

## सुञो(८१) यज्ञसंयोगे। ३। २। १३२।

सर्वे सुन्वन्त सर्वे यजमाना सत्रिण ।

## अर्हः प्रशंसायाम्। ३। २। १३३।

अर्हन्।

## आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु (८२)। ३। २। १३३।

क्विपमभिव्याप्य वक्ष्यमाणा प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु।

(८१) सुनोति यज्ञस्नपनार्थ इति यज्ञेन संयुज्यमाने धात्वर्थे शिवत्वेन । संयो-
गग्रहणात् प्रधानकर्मसंयोगाय प्रत्ययेन यजमान एव सुन्वन्
नान्य इति सूत्रेऽपि नान्यत्र शतृप्रत्यय इति । मनो०

(८२) आक्वेरिति आङ् अभिविधौ निर्द्दिष्टैस्तच्छीलादिभिः कर्तृभिः
भूते धात्वर्थेऽपि इष्यते ।

तृन् । ३ । २ । १३५ ।

कर्त्ता कटम् ।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । ३ । २ । १३६ ।

अलङ्करिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्त्तिष्णुः । वर्द्धिष्णुः । सहिष्णुः । चरिष्णुः ।

णेश्छन्दसि । ३ । २ । १३७ ।

"वीरुधः पारयिष्णवः" ।

भुवश्च । ३ । २ । १३८ ।

छन्दसीत्येव । भविष्णुः । कथं तर्हि "जगत्प्रभोरप्रभविष्णु वैष्णवमिति" । निरङ्कुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति हरिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् ।

ग्लाजिस्थश्च क्स्नुः । ३ । २ । १३९ ।

छन्दसीति निवृत्तम् । गिदयं न तु कित् तेन स्थ ईत्वम् । ग्लास्नुः । गित्त्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । श्र्युकः क्किति (७।२।११) गकारप्रश्लेषान्नेट् । भूष्णुः । दंशेश्छन्दस्युपसंख्यानम् * । "दंक्ष्णवः पशवः" ।

त्रसिगृधिधृषिक्षिपेः क्नुः । ३ । २ । १४० ।

अकर्मकाद्युच् स्यात्। वर्त्तनः। वर्धनः। अनुदात्तेतः किम् भविता। हलादेः किम् एधिता। अकर्मकात् किम् वसिता वस्त्रम्।

जुचंक्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः। ३।२।१५०।

जु इति सौत्रो धातुर्गतौ वेगे च। जवनः। चंक्रमणः। दन्द्रमणः। सरणः। पूर्वेण (८४) सिद्धे पदग्रहणं लषपतपदेत्युकञा (उ० ३३२ पृ०) बाधा मा भूदिति तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति (८५) तेनालंकृञमसृन् न।

क्रुधमण्डार्थेभ्यश्च। ३। २। १५१।

क्रोधनः। रोषणः। मण्डनः। भूषणः।

न यः। ३। २। १५२।

यकारान्ताद्युच् न स्यात्। क्नूयिता। क्ष्मायिता।

सूददीपदीक्षश्च। ३। २। १५३।

युच् न स्यात्। सूदिता। दीपिता। दीक्षिता। नमिकम्पीति (उ० ३७५ पृ०) रेण युचो बाधे सिद्धे दीपिग्रहणं ज्ञापयति ताच्छीलि

(८४) पद्यतेरकर्मकत्वादनुदात्तेत्वाद्धलादित्वाच्चानुदात्तेत इत्यनेन (३७० पृ०) प्राप्ते इत्यर्थः।

(८५) अन्यथा [illegible] हि ताच्छीलिकादिषु वासरूपविधिना [illegible] भाष्ये [illegible] तु ताच्छीलिकेषु परस्परं [illegible] इति भावः।

केषु चामरूपविधिर्नास्तीति प्राचिकमिति । तेन कम्रा कमना युवतिः । कम्प्रा कम्पना शाखा । यत्तु सूत्रेऽपि न कथं मधु- सूदन नम्यादिः (३।१।५८) ।

**लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ।**

**३ । २ । १५४ ।**

लापुकः । पातुकः इत्यादि ।

**जल्पभिक्षकुट्टलुण्टवृङः षाकन् । ३ । २ । १५५ ।**

जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः वराकी ।

**प्रजोरिनिः । ३ । २ । १५६ ।**

प्रजवी प्रजविनौ प्रजविनः ।

**जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ।**

**३ । २ । १५७ ।**

जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ।

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।**

**३ । २ । १५८ ।**

आयादयश्चुरादावदन्ताः । स्पृहयालुः । गृहयालुः । पत- यालुः । दयालुः । निद्रालुः तत्पूर्वो द्रा तदो नान्तत्व- न्निपात्यते । तन्द्रालुः । श्रीङो वाच्यः । श्रयालुः ।

दाधेट्सिशदसदो रुः । ३ । २ । १५९ ।

दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ।

सृघस्यदः क्मरच् । ३ । २ । १६० ।

सृमरः । घस्मरः । अद्मरः ।

भञ्जभासमिदो घुरच् । ३ । २ । १६१ ।

भङ्गुरः (८६) । भासुरः । मेदुरः ।

विदिभिदिच्छिदेः कुरच् । ३ । २ । १६२ ।

विदुरः (८७) । भिदुरम् । छिदुरम् ।

इण्नश्जिसर्तिभ्यः क्वरप् । ३ । २ । १६३ ।

इत्वरः इत्वरी । नश्वरः । जित्वरः । सृत्वरः ।

गत्वरश्च । ३ । २ । १६४ ।

गमेरनुनासिकलोपोऽपि निपात्यते गत्वरी ।

जागरूकः । ३ । २ । १६५ ।

जागर्त्तेरूकः स्यात् जागरूकः ।

यजजपदशां यङः । ३ । २ । १६६ ।

---

(८६) अभिधानस्वाभाव्यात् भञ्जेः कर्मकर्तर्य्येवायं घुरच्प्रत्ययः । तत्त्व० ।

(८७) विदेर्ज्ञानार्थस्य कुरच् । कर्मकर्तर्य्यपि भवति "[illegible]-मध्याच्छिद्रया [illegible]" इत्यादि प्रयोगात् । तत्त्व० ।

एभ्यो धातुभ्यः अकः स्यात्। वुणामिति भाविना नलोपेन निर्देशः। जागरूकः। अवदूकः दन्दशूकः।

**नमिकम्पिस्म्यजसकमहिंसदीपो रः। ३। २। १६७।**

नम्रः। कम्पः। स्मेरः। जमिनं नञ्पूर्वक क्रियामातत्य वर्त्तते। भजस्त्र सन्ततमित्यर्थः। कम्रः। हिंस्रः। दीप्रः।

**सनाशंसभिक्ष उः। ३। २। १६८।**

चिकीर्षुः। आशंसुः। भिक्षुः।

**विन्दुरिच्छुः (९८)। ३। २। १६९।**

वेत्तेर्नुम् इषेश्छत्वञ्च निपात्यते। वेत्ति तच्छीलो विन्दुः। इच्छति इच्छुः।

**क्याच्छन्दसि (९९)। ३। २। १७०।**

"देवान् जिगाति सुम्नयुः" (१००)।

**आदृगमहनजनः किकिनौ लिट् च। ३। २। १७१।**

(९८) विद ज्ञाने इत्यस्यैवेह ग्रहणं नान्येषामर्थकल्यवेहेऽपि इच्छम्।

(९९) क्यच्, क्यङ्, क्यष् एतेषां सामान्यग्रहणम् क्यान्ताद्धातोश्छन्दोविषये उप्रत्ययः स्यादित्यर्थः।

(१००) सुम्नयद्यात् क्यजन्तात् न छन्दस्युत्तपेति (उ५,२४पृ०) निषेधात् क्यचि चेति (३२२०पृ०) इत्यस्य, च अकृत्सार्वधातुकयोरिति (३५१पृ०) दीर्घश्च न भवतीति द्रष्टव्यम्।

आद्दन्तात् दन्तात् (१०१) गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिट्वत्। पपिः। सोमम्। ददिर्गाः। बभ्रिर्वज्रम्। जग्मिर्युवा। "अग्निर्वृत्रमभिवृत्रम्"। जज्ञिः भाषायां धाञ् कृञ्सृजनिगमिनमिभ्यः *। दधिः। चक्रिः। सस्रिः। जग्मिः। जज्ञिः। नेमि (१०२)। सासहिवावहिचाचलिपापतीनामुपसङ्ख्यानम् * यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतनीं गमावश्च निपात्यते।

स्वपितृषोर्नजिङ्। ३। २। १७२।

स्वप्नक्। तृष्णक् तृष्णजौ तृष्णजः। धृषेश्चेति वाच्यमिति * कासिकादौ। धृष्णक्।

शृवन्द्योरारुः। ३। २। १७३।

शरारुः। वन्दारुः।

भियः क्रुक्लुकनौ। ३। २। १७४।

भीरुः। भीलुकः। क्रुकन्नपि वाच्य.*। भीरुकः।

स्थेशभासपिसकसो वरच्। ३। २। १७५।

स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः।

---

(१०१) अदति कार्यपरत्वाशङ्कायाम् आदिति अकारस्य तपरत्वादाह अदन्तादिति। यथा च तपरस्यापि तत्कालसंज्ञा तथोक्तं (पृ॰८५०) प्राक्।

(१०२) लिड्वद्भावात् नमे एत्त्वाभ्यासलोपात् सिद्धम्।

## यश्च यङः। ३। २। १७६।

यातेर्यङन्ताद्वरच् स्यात्। अतो लोपः (७५७पृ०)। तस्याचः परस्मिन्निति (पृ३४पृ०) स्थानिवद्भावे प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् ⁑ तस्य यलोपम्प्रति स्थानिवद्भावनिषेधात् लोपो व्योरिति (पृ४२१पृ०) यलोपः अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे वरे लसत्र स्थानिवत्। यायावरः।

## भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्। ३। २। १७७।

विभ्राट्। भाः भासौ। धूः धुरौ। विद्युत्। ऊर्क्। पूः पुरौ। दृशिग्रहणस्यापकर्षात् जवतेर्दीर्घः (१०३)। जूः जुवौ जुवः। ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते ततः क्विप्। ग्रावस्तुत्।

## अन्येभ्योऽपि दृश्यते। ३। २। १७८।

क्विप्। छित्। भिद्। दृशिग्रहणम् विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः क्वचिदसम्प्रसारणं क्वचिद् द्वे क्वचिद्ध्रस्वः। तथाच वार्त्तिकम्। क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च *। क्विब्वचीत्यादिना (७३९८पृ०) उणादिसूत्रेण केषाञ्चित् सिद्धे तच्छीलादौ तृणा बाधा मा भूदिति वार्त्तिके

⁑ न पदान्तद्विर्वचनेत्यादि (पृ३५पृ०) सूत्रेणेति शेषः।

(१०३) उत्तरसूत्रे दृशिग्रहणस्य विध्यन्तरविशेषसमर्पकताया वक्ष्यमाणतयाऽत्रापि तदपकर्षाद्दीर्घं इत्याह जवतेरिति।

मच्छम् । वञ्चीति वाक् । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटम्प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः । द्युगमिजुहोतीनां द्वे च *। इग्रिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् । जुहोतेर्दीर्घश्च* । जुहूः । दृ भये । अस्य ह्रस्वश्च । दीर्ध्यति । दद्दत् । ध्यायतेः सम्प्रसारणञ्च* । धीः ।

## भुवः संज्ञान्तरयोः । ३ । २ । १७९ ।

मित्रभूर्नाम कश्चित । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ।

## विप्रसंभ्यो डुसंज्ञायाम् । ३ । २ । १८० ।

एभ्यो भुवो डु स्यात्तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता । संज्ञायान्तु विभूर्नाम कश्चित् । मितद्र्वादिभ्य उपसंख्यानम्* । मितन्द्रवतीति मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवति ।

## धः कर्मणि ष्ट्रन् । ३ । २ । १८१ ।

धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । धात्री जनन्यामलकी वसुमत्युपमातृषु ।

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । ३ । २ । १८२ ।

दाबादेः ष्ट्रन् स्यात् करणेऽर्थे । दात्यनेन दात्रम् । नेत्रम् ।

## तितुत्रतथसिसुसरकसेषु च । ७ । २ । ९ ।

एषां (१०४ दशानां कृत्प्रत्ययानामिट् न स्यात्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। नद्ध्री।

## हलसूकरयोः पुवः। ३। २। १८३।

पूङ्पूञोः करणे ष्ट्रन् स्यात् तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रम् मुखमित्यर्थः।

## अर्त्तिलूधूसूखनसहचर इत्रः। ३। २। १८४।

अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।

## पुवः संज्ञायाम्। ३। २। १८५।

पवित्रम् येनाज्यमुत्पूयते यच्चानामिकावेष्टनम्।

## कर्त्तरि चर्षिदेवतयोः। ३। २। १८६।

पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्त्तरि। ऋषिर्वेद-मन्त्रः तदुक्तमृषिणेति दर्शनात्। पूयतेऽनेनेति पवित्रम्। देवतायान्तु अग्निः पवित्रं स मा पुनातु।

---

(१०४) ति तुन् त्रन् तन् क्थन् क्सि सुच् क्सरन् कन् स इत्येषामित्यर्थः तत्र ति इति क्तिक्तिचोर्ग्रहणम् क्तिन् दीपो दीप्तिः। क्तिच् तनु तन्तिः। तुन् सच सक्तुः। त्रन् पत पत्त्रम् तन तन्त्रम्। तन् उणादिक एव न निष्ठातस्तेन हसितादिसिद्धिः। इस इस्तः पूञ् पोतः। क्थन् कुष कोष्ठम्। क्सि कुष कुक्षिः। सुच् इष इक्षुः। क्सरन् अक्ष अक्षर.। कन् शल शल्कः। स वद वत्स इत्यादौ नेडित्युदाहार्य्यम्।

अथोणादयः (१)।

कृवापाजिमिस्वदिसाध्यशूभ्य उण् १। करोतीति कारुः शिल्पी कारकश्च। आतो युक् (उ२७३पृ०)। वातीति वायुः। पायुर्गुदम्। जयत्यभिभवति रोगान् जायुरौषधम्। मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्यं साधुः। अश्नुते आशु शीघ्रम्। "आशुर्व्रीहिः पाटलः स्यात्"। छन्दसीणः २ (२)। "मा न आयौ"। दृसनिजनिचरिचटिभ्यो ञुण् ३। दीर्यत इति दारु। "स्नुः प्रस्थः सानुरस्त्रियाम्"। जानु जानुनी। इह जनिवध्योश्चेति (उ१६पृ०) न निषेधः अनुबन्धद्वयसामर्थ्यात् (३)। चारु रम्यम्। चाटु प्रियवाक्यम्। मृगय्वादित्वात् (उ३८४पृ०) कुप्रत्यये चटु इत्यपि। किंजरयोः श्रिणः (४) ४। किं शृणोतीति किंशारुः सस्यशूकम् बाणश्च। जरामेति जरायुः। "गर्भाशयो जरायुः स्यात्"। त्रो रश्च लः ५। तरन्त्यनेन वर्णा इति तालु। कृके वचः कश्च ६। कृकेण गलेन वक्तीति कृकवाकुः। "कृकवाकुर्मयूरे च सरटे चरणायुधे" इति विश्वः। भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ७।

(१) उणादयो बहुलमिति (उ४२१पृ०) सूत्रकृतोक्तं तत्र प्रकृतिविशेषेभ्यः प्रत्ययविशेषा शाकटायनेन पञ्चपाद्या सपादशतत्रयमिता दर्शिता-स्तत्प्रकरणारम्भाय प्रतिजानीते अथोणादय इति।

(२) बहुलवचनाद्भाषायामपि तेन एतीत्यायु जटा आयुर्यस्येति जटायु-रिति एतेर्णिच्चेति (उ४०२पृ०) सूत्रे उसिप्रत्यये तु आयुःशब्दः सान्तः।

(३) वस्तुत मप्रथ्या जानुनो ज्ञुरिति (पृ४२०पृ०) सूत्रनिर्देशज्ञापकात् न वृद्धिनिषेध।

(४ किमि उपपदे शृणाते जरोपपदे इणश्च ञुण् स्यादित्यर्थः।

भरति बिभर्त्ति वा भरुः हरिर्हरश्च। स्त्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः। शेते शयुः अजगरः। तरुर्वृक्षः (५)। चरन्ति भक्षयन्ति देवता इममिति चरुः। त्सरुः खड्गादिमुष्टिः। तनु स्वल्पम्। तन्यते कर्म्मपाशोऽनया तनुः शरीरम्। "स्त्रियां मूर्त्तिस्तनुस्तनूः"। धनुः शस्त्रविशेषः। "धनुर्नां च धनुर्विंदुः"। "धनुरिवाजनि वक्र" इति श्रीहर्षः। मयुः किन्नरः। मद्गुः(६)। पानीयकाकिकेति रभसः न्यङ्क्वादित्वात् (उ२०७५०) कुत्वं जश्त्वेन तस्य दः। अणश्च ८। "लवलेशकणाणवः"। चात्कटिवटिभ्याञ्च। कटुः। वटति वष्टतीति वटुः। धान्ये नित् ९। धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित्। नित्त्वादाद्युदात्तः। "प्रियङ्गवश्चाणवश्च मे"। "व्रीहिभेदस्त्वणुः पुमान्"। निन्नूहणं फलिपाटीत्यादि (उ१८२४०) १८ सूत्रमभिव्याप्य सम्बध्यते। शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमणिभ्यश्च १०। शृणातीति शरुरायुधकोषयोः। स्वर्य्यन्ते प्राणिनम् अनेन स्वरुर्वज्रम्। स्नेहुर्व्याधिः चन्द्र इत्यन्ये। त्रपु (७) सीसम्। "पुंसि भून्मासवः प्राणाः"। "वसुर्द्रदेऽग्नौ योक्त्रेंऽशौ वसु तोये धने मणौ"। हनुर्वक्त्रैकदेशः। क्लेशश्चन्द्रः। बन्धुः (८)। मनुः। चात् विदि अवयवे विन्दुः। स्यन्देः सम्प्रसारणन्धश्च ११। "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रिया" मित्यमरः।

(५) तरन्ति रोपका नरकमनेनेति तरुरिति।

(६) भक्षार्थं पानीयं मज्जतीति मद्गुः पक्षिविशेषः (पानकौडोति) प्रसिद्ध। गडि वदनैकदेशे इत्यतोऽपि उरित्युक्तबलस्तस्तेन गण्डुः।

(७) अग्निं दृष्ट्वा त्रपते लज्जते आशुद्रवीभावादिति त्रपु सीसम्।

(८) स्नेह बध्नातीति बन्धुः।

उन्देरिचादेः १२। उनत्ति इन्दुः। ईषि. किच्च १३ ईषेरुः किस्यात् स च कित् आदेरिकारादेशश्च। ईषते हिनस्ति इषुः शरः। इषुद्वयोः। स्कन्देः सलोपश्च १४। कन्दुः। सृजेरसुम च १५। चात् सलोप उप्रत्ययश्च। रज्जुः। कृतेराद्यन्तविपर्ययश्च १६। ककारतकारयोर्विनिमयः। तर्कुः सूत्रवेष्टनम्। नावञ्चेः १७। न्यङ्क्वादित्वात् (उ१०७पृ०) कुत्वम्। नियतमञ्चति न्यङ्कुर्मृगः। फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च १८। फलेर्गुक् फल्गुः। पाटेः पटिः पाटयतीति पटुः। नम्यतेऽनेन नाकुर्वल्मीकम्। मन्यते इति मधु। जायते इति जतु। बलेर्गुक् च १९। बल संवरणे वल्गुः। शः कित्सन्वच्च २०। श्यतेरुः स्यात् स च कित् सन्वच्च। शिशुर्बालः। यो द्वे च २१। यथु "रक्षोऽश्वमेधीयः"। सन्वदिति प्रकृते द्वे ग्रहणमित्वनिवृत्त्यर्थम्। कुर्भ्रश्च २२। "बभ्रुर्मन्वन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ"। चादन्यतोऽपि। चक्रुः कर्त्ता। जघ्नुर्हन्ता। पपुः पालकः। पृभिदिव्यधिगृधिधृषिभ्यः २३। कुः स्यात्। पुरुः। भिनत्ति भिदुर्वज्रम्। ग्रहिज्येति (उ१०६पृ०) सम्प्रसारणम्। विरहिणं विध्यति विधुः। "विधु. शशाङ्के कर्पूरे हृषीकेशे च राक्षसे"। गृधुः कामः। धृषुर्दक्षः। कृग्रोरुच्च २४। करोतीति कुरुः। गृणातीति गुरुः। अपदुःसुषु स्थः २५। सुषमादिषु चेति (पू४७४पृ०) षत्वम्। अपष्ठु प्रतिकूलम्। दुष्ठु। सुष्ठु। रपेरित उपधायाः २६। अनिष्टं रपतीति रिपुः। अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च २७। अर्जयति गुणान् ऋजुः। सर्वानविशेषेण पश्यतीति पशुः।

कन्तुः (९)। मन्थुः कूपः। "पांसुर्ना न द्वयो रजः"। "ताल-
व्या अपि दन्त्याश्च संपांसुकरपांसवः"। बाधते इति बाहुः
"बाहुः स्त्रीपुंसयोर्भुजा"। प्रथिम्रदिभ्रस्जां सम्प्रसारणं स-
लोपश्च २८। एषां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च। पृथुः।
मृदुः। न्यङ्क्वादित्वात् (उ१०७५०) कुत्वम्। भृज्जति तपसा भृगुः।
लङ्घिबंह्योर्नलोपश्च २९। लघुः। बालमूललघ्वलमङ्गुलीनां
वा लो रत्वमापद्यते *‡। रघुर्नृपभेदः। बहुः। ऊर्णोतेर्नु-
लोपश्च ३०। ऊरु सक्थि। महति ह्रस्वश्च ३१। उरु महत्।
श्लिषेः कश्च ३२। श्लिष्यतीति श्लिकुः भृत्यः उद्यतं ज्योतिश्च।
आङ्परयोः खनिशृभ्यां डिच्च ३३। आ खनतीत्याखुः। परं
शृणातीति परशुः। पृषोदरादित्वादकारलोपात् पर्शुरपि।
हरिमितयोर्द्रुवः ३४। द्रु गतौ अस्मात् हरिमितयोरुप प-
दयोः कुः स च डित्। हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितन्द्र-
वति मितद्रुः समुद्रः। शते च ३५। शतधा द्रवति शतद्रुः।
बाहुलात् केवलादपि। द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च।
तद्वान् द्रुमः। खरुशङ्कुपीयुनीलङ्गुलिगु ३६। पञ्चैते कुप्रत्य-
यान्ता निपात्यन्ते। खनतेरेफश्चान्तादेशः। खरुः कामः
क्रूरो मूर्खोऽश्वश्च। "शङ्कुर्ना कीलशल्ययोः"। पिबतेरीत्वं
युगागमश्च। पीयुर्वायसः कालः सुवर्णश्च। निपूर्वाल्लगि
गतावस्मात् कुर्नेर्दीर्घश्च। नीलङ्गुः कृमिविशेषः शृगालश्च।

---

(९) कन्तुः कन्दर्पः। कमिमनीति सूत्रेण (उ१८७५०) तुना सिद्धावपि
स्वरार्थमत्र पठनम्।

‡ एतच्च वार्त्तिकं कृपो रो ल इति (८।२।१८) सूत्रस्थम्।

नीलाङ्गुरिति पाठान्तरम्। तत् धातोरपि दीर्घः। लग सङ्गे अस्य मत इत्त्वञ्च लगतीति लिगु चित्तम् लिगुर्मूर्खः। मृगय्वादयश्च ३७ (१०)। एते कुप्रत्ययान्ता निपात्यन्ते। मृगं यातीति मृगयुर्व्याधः। देवयुर्धार्म्मिकः। मित्रयुर्लोक यात्राभिज्ञः। आकृतिगणोऽयम्। मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ३८। मन्दुरा वाजिशाला। वाशुरा रात्रिः। मथुरा। चतुरः। चङ्कुरा रथ..। अङ्कुरः। खर्जूरादित्वात् (उ४।८४ सू०) अङ्कूरोऽपि। व्यथेः सम्प्रसारणं किच्च ३९। "विथुरश्चोररक्षसोः। मकुरदर्दुरौ ४०। मकुरो दर्पणः। बाहुलकान्मुकुरोऽपि। दृ विदारणे धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च। "दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः। दर्दुरा चण्डिकायां स्याद् ग्रामजाले च दर्दुरमिति विश्वः। मद्गुरादयश्च ४१ (११)। उरजन्ता निपात्यन्ते। माद्यतेर्गुक् मद्गुरो मत्स्यभेदः कब्रु वर्णे रुगागमः। "कर्वुरः श्वेतरक्षसोः" बध्नातेः खर्जूरादित्वात् (उ४।८४ सू०) ऊरोऽपि। बन्धूरबन्धुरौ स्यातावम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः। कोकतेर्वा कुक्। कुक्कुर—कुकुरः। असेरुरन् ४२। असुरः। प्रज्ञाद्यण् (पू०७२६ सू०)। आसुरः। मसेश्च ४२। पञ्चमे पादे मसेरूर

---

(१०) मृगद्रु देवयु मित्रयु कुमारयु "राजपुत्र" अध्वर्युर्याजकः। कूक्रः कूक्ररमावास्याचन्द्र पाण्डु श्वेत राजभेदश्च पीलुर्मतङ्गजः द्रुम-भेदश्च मञ्जु शोभनं मृकण्डु ऋषिभेद निघण्टु कोषभेद पलाण्डुर्मूल-भेद कर्करेटु पक्षिभेद. करेटु डमरुवाद्यभेदः। आकृतिगणत्वादन्ये-ऽप्यूह्या।

(११) मद्गुरादेराकृतिगणत्वात् आतुरशकुलाकुलशागुरादीनां सिद्धिः।

विति (उ०२८८सू०) वक्ष्यते। "मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति। मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः। मसूरी पादरोगे स्यादुपधाने पुनः पुमान्। मसूरमसुरौ च द्वाविति" विश्वः। प्रावश्वेराशौ (१२) ४४। शु इति आश्वर्थे। श्वशुरः (१३)। "पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयो"-रित्यमरः। अविमह्योष्टिषच् ४५। अविषः (१४)। महिषः। अमेर्दीर्घश्च४६। "आमिष त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि" रुहेर्वृद्धिश्च ४७ "रङ्कुशम्बररौहिषाः" "रौहिषा मृगभेदे स्याद्रौहिष च तृणं मत" मिति संसारावर्त्तः। तवेर्णिद्वा ४८ तवेति सौत्रो धातुः। तविषताविषावब्धौ स्वर्गे च। स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च। तविषो बलमिति वेदभाष्यम्। नञि व्यथेः ४९। "अव्यथिषोऽब्धिसूर्य्ययोः। अव्यथिषी धरा-रात्र्योः"। किलेर्बुक् च ५०। किल्बिषम्। इषिमदिमुदिखि-दिछिदिभिदिमन्दिचण्डितिमिमिहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ५१। इषिरोऽग्निः। मदिरा सुरा। "मुदिरः कामुका-भ्रयोरिति" विश्वमेदिन्यौ। खिदिरश्चन्द्रः। "छिदिरोऽसिकुठा-रयोः"। भिदिरं वज्रम्। मन्दिरम् गृहम् स्त्रियामपि। "मन्दि-रश्मन्दिराऽपि स्यादिति" विश्वः। "चाण्डिरो चन्द्रहस्तिनौ"।

---

(१२) आश्वर्थे शौ उपपदे आप्नौ गम्यमानायाम् अशूङ् व्याप्तावित्यस्मादुरन् स्यादित्यर्थः।

(१३) आशु आप्नव्यः उत्पत्तिं विनापि वैवाहिकसम्बन्धात् सम्बन्धितया प्राप्नव्य इति श्वशुरशब्दार्थः।

(१४) अवन्ति प्रीणयन्ति नद्योऽमुमिति समुद्रोऽविषः। मह्यन्ते देवा अने-नेति महिषः पशुभेदः।

तिमिरन्तमोऽक्षिरोगश्च ।० मिहिरः सूर्य्यः। "मुहिरः काम्य-मूर्खयोः"। मुखिरो दाता। रुचिरम्। रुधिरम्। बधिरः। शुष शोषणे शुषिरञ्छिद्रम् शुष्कमित्यन्ये। अशेर्णित् ५२। "आशिरो वह्निरक्षसोः"। अजिरशिशिरशिथिलस्थिरस्फिर-स्थविरखदिराः ५३। अजेर्वीभावाभावः। अजिरमङ्गणम्। शशेरुपधाया इत्त्वम्। "शिशिरं स्यादृतोर्भेदे तुषारे शीतले-ऽन्यवत्"। अथ मोचने उपधाया इत्त्वं रेफलोपः प्रत्ययरेफस्य लत्वञ्च। शिथिलम्। स्थास्फायोष्टिलोपः। स्थिरन्निश्च-लम्। स्फिरं प्रभूतम्। तिष्ठतेर्बुक् ह्रस्वत्वञ्च। स्थविरः। खदिरः। बाहुलकात् शीङो वुक् ह्रस्वत्वञ्च। शिविरम्। सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इ-लच् ५४। सलति गच्छति निम्नमिति सलिलम्। कलि-लः। अनिलः। महिला। पृषोदरादित्वान्महेलापि। भड इति सौत्रो धातुः। "भडिलौ शूरसेवकौ"। भण्डिलो दूतः कल्याणश्च। शण्डिलो मुनिः। पिण्डिलो गणकः। तुण्डिलो मुखरः। कोकिलः। भविलो भव्यः। बाहुल-कात् कुटिल। कमेः पश्च ५५। कपिलः। गुपादिभ्यः (१५) कित् ५६। गुपिलो राजा। तिजिलो निशाकरः। गुहिलं वनम्। मिथिलादयश्च(१६)श्च ५७। मथ्यन्तेऽत्र रिपवो मिथिला

---

(१५) गुप् रक्षणे तिज निशाने पूज पूजायां शुष शोषणे देवृ देवने गुहू संवरणे इति गुपादयः।

(१६) मिथिला नगरी पतिला वेत्रलता तकिलौषधिः चण्डिला नदी पथिलः पथिकः मिथिलादि।

नगरी। पथिलः पथिकः। पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ५८। पतेरः पक्षी गन्ता च। कठेरः कृच्छ्रजीवी। कुठेरः पर्णासः। बाहुलकान्नुम्। गन्तेरो मेघः। गुडेरो गुडकः। दंशेरो हिंस्रः। कुम्बेर्नलोपश्च ५९। कुबेरः। शदेस्त च ६०। शतेरः शत्रुः। मूलेरादयः ६१। एरमन्ता निपात्यन्ते। मूलेरो जटा। गुधेरो गोप्ता। गुहेरो लोहघातकः। मुहेरो मूर्खः। कवेरोतच् पश्च ६२। कपोतः पक्षी। भातेर्डवतुप् ६३। भातीति भवान्। कठिचकिभ्यामोरन् ६४। कठोरः। चकोरः। किशोरादयश्च(१७) ६५। किंपूर्वस्य शृणातेष्टिलोपः। किमोऽन्त्यलोपः। किशोरः अश्वशावः। सहोरः साधुः। कपिगडिगण्डिकटिपटिभ्य ओलच् ६६। कपीति निर्देशान्नलोपः। कपोलः। गडोलगण्डोलौ गुडकपर्य्यायौ। कटोलः कटुः। पटोलः। मीनातेरूरन् ६७। मयूरः। सन्देः सम्प्रसारणञ्च ६८। सिन्दूरम्। सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ६९। सिनोतीति सेतुः। तितुत्रेति (७२७८ सू०) नेट्। तन्तुः। गन्तुः। मस्तु दधिमण्डम्। सच्यत इति सक्तुः। अर्द्धर्चादिः। ज्वरत्वरेत्यूठ् (७२१८ सू०) तत्र क्ङितीत्यनुवर्त्तत इति मते तु बाहुलकात्। ओतुर्विड़ालः। धातुः। क्रोष्टा। पः किच्च ७०। पिबतीति "पितुर्वह्नौ दिवाकरे"। अर्त्तेश्च तुः ७१ अर्त्तेस्तुः स्यात् स च कित्। "ऋतुः स्त्रीपुष्पकालयोः"। कसिमनिजनिगाभायाहिभ्यश्च ७२। एभ्यस्तुः स्यात्। "कन्तुः कन्द-

---

(१७) गौरोऽरुणे सिते पीते विशुद्धेऽश्वाभिधेयवदित्यर्थकः गौरोऽश्वादिपर्य्यायश्चः।

पश्चिमयोः"। मन्तुरपराधः। जन्तुः प्राणी। "गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च"। भातुरादित्यः। "यातुरध्वगकालयोः"। रक्षसि क्लीवः। हेतुः कारणम्। चायः किः ७३। "केतुर्ग्रह-पताकयोः"। आप्नोतेर्ह्रस्वश्च ७४। अप्तः शरीरम्। वसेस्तुन् ७५। वस्तु। अगारे णिच्च ७६। "वेश्मभूर्वास्तुरस्त्रियाम्"। हृञः क्रतुः ७७। क्रतुर्यज्ञः। एधिवह्योश्चतुः (१८) ७८। एधतुः पुरुषः। वहतुरनड्वान्। जीवेरातुः ७९। "जीवातुरस्त्रिया-मन्ने जीविते जीवनौषधे"। आतृकन् वृद्धिश्च ८०। जीवेरित्येव। "जैवातृकस्त्विन्दुभेकभिषङ्गायुष्मत्कृषीवले"। कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ८१। "कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियाम्मता"। चमूः। तनूः। धनूः शस्त्रम्। सर्ज अर्जने सर्जूर्वणिक्। खर्ज व्यथने खर्जूः पामा। मृजेर्गुणश्च ८२ (१९)। मर्जूः शुद्धिकृत्। वहेर्धश्च ८३। "वधूर्जायास्नुषास्त्रीषु"। कषेः छश्च ८४। कच्छूः पामा। णित्कसिपद्यर्तेः ८५। कासूः शक्तिः। पादूश्चरणधारणी। आरूः पिङ्गलः। अणो डश्च ८६। आडूर्जलप्लवद्रव्यम्। नञि लम्बेर्नलोपश्च ८७। "तुम्बरलाबूरुभे समे" इत्यमरः। के श्र एरङ् चास्य ८८। कशब्दे उपपदे शृणातेरूः स्यादेरङ् चादेशः। "कशेरूस्तृणकन्दे स्त्री"। बाहुलकादुप्रत्यये कशेरु क्लीवे पुंसि च। त्रो दुट् च ८९। तरतेरूः स्यात् तस्य दुट्। "तर्दूः स्यात् दारुहस्तकः"। दरिद्रातेर्यालोपश्च ९०

---

(१८) चतोऽयकारोऽन्तोदात्तता चित इति (उ५।१६४०) सूत्रात्।

(१९) अत्र स्वडेर्डुर्हिति सूत्रान्तरमप्यस्तीत्युज्ज्वलदत्तः सर्वासम्मतत्वात्तदुपेक्षितं ग्रन्थकृता।

इत्र चास्य यो तयोर्लोपः। दद्रूः कुष्ठप्रभेदः। नृतिशृध्योः कूः ८१। नृतूर्नर्त्तकः। शृधूरपानम्। ऋतेरम् च ८२। ऋतिः सौत्रो धातुः। ततः कूः अमागमश्च। रतूर्देवनदी सत्यवाक् च। अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषु ८३। एते कूप्रत्ययान्ता निपात्यन्ते। अन्दूर्बन्धनम। दृभौ ग्रन्थे निपातनान्नुम्। दृन्भूः अनुस्वाराभावोऽपि निपातनादित्येके। दृनभूः। जने-र्बुक्। जम्बूः। जमु अदने इत्यस्येत्येके। बाहुलकात् ह्रस्वोऽपि जम्बुः। कफं लाति कफेलूः श्लेष्मातकः। निपातनादेत्वम। कर्कन्दधाति कर्कन्धूर्वदरी निपातनान्नुम्। दिधिन्धैर्य्यं स्यति त्यजतीति दिधिषूः पुनर्भूः। केचित्तु अन्दूदृम्फूकम्बू इति पठन्ति। दृम्फ उत्क्लेशे दृम्फूः सर्पजातिः। कमेर्बुक्। कम्बूः परद्रव्यापहारी। मृग्रोरुतिः ८४। मरुत्। गरुत्पक्षः। ग्रो मुट् च ८५। गिरतेरुतिस्तस्य च मुट्। गर्मुत् सुवर्णन्तृणवि-शेषश्च। हृषेरुलच् ८६। "हर्षुलो मृगकामिनोः"। बाहुल-काच्चटतेः। चटुलं शोभनम्। हृसृरुहियुषिभ्य इतिः ८७। "हरित्ककुभि वर्णे च तृणवाजिविशेषयोः"। सरिन्नदी। रोहित् मृगविशेषस्य स्त्री। युष इति सौत्रो धातुः। "ऋश्यस्य रोहित् पुरुषस्य योषित्" इति भाष्यम्। ताडेर्णिलुक् च ८८। ताड़यतीति तडित्। शमेर्ढः ८९। बाहुलकादित्त्वं शा एयादेश इट् च न। "शण्ढः क्लीवः स्यात् पुंसि गोपती। श्रीक-ण्टाण्डे वर्षवरे तृतीयप्रकृतावपि"। कमेरठः १०० "कमठः कच्छपे पुंसि भाण्डभेदे नपुंसक" मिति मेदिनिः। बाहुलकाज्जरठः। रमेर्वृद्धिश्च १०१ "रामठं हिङ्गु"। शमेः खः १०२। शङ्खः। कणेष्ठः

१०३। कण्ठः। कलस्तृपश्च १०४। तृपतेः कलप्रत्ययः। चात् तृफतेः। तृफला लता। "तृफला च फलत्रिके"। शपेर्वश्च १०५ शबलः। वृषा २० दिभ्यश्चित् १०६। वृषलः। पललम्। बाहुलकात् णः सरलः। तरलः। कमेर्बुक्। कम्बलः। मुस खण्डने। मुसलम्। लङ्गेर्वृद्धिश्च। लाङ्गलम्। कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्। कुट्मलः। कुडेरपि। कुड्मलः। कश्मलम्। बाहुलकात् णः। कौमलम्। मृजेष्टिलोपश्च १०७। मलम्। चुपेरच्चोपधायाः १०८। चपलम्। शकिशम्योर्नित् १०९। शकलम्। शमलम्। छो गुगह्रस्वश्च ११०। छगलः। प्रज्ञादित्वाच्छागलः। अमन्ताड्ड १११। दण्डः। रण्डा। खण्डः। मण्डः। वण्डश्छिन्नहस्तः। अण्डः। बाहुलकाण्णत्वाभावः। षण्डः सङ्घातः। तालव्यादिरित्यपरे। शण्डः। गण्डः। पण्डः क्लीबः। पण्डा बुद्धिः। क्रादिभ्यः कित् ११२। कवर्गादिभ्यो डः कित् स्यात्। कुण्डः शाण्डम्। गुड् गुडः। घुण भ्रमणे घुण्डो भ्रमरः। स्थाचतिमृजेरालज्वालञालीयच ११३। तिष्ठतेरालच्। स्थालम् स्थाली। चतेर्वालञ्। चात्वालः। मृजेरालीयच्। मार्जालीयो बिडालः। पतिचण्डिभ्यामालञ् ११४। पातालम्। चण्डालः। प्रज्ञा(पृ०७२६सू०)-

(२०) वृषु सेचने वृषलः। कुश इति सौत्रो धातुः कुशलो दक्षः। पल गतौ पललं मांसम्। देवृ देवने देवलो देवाद्योपजीवी। सृ गतौ सरलः उदारोऽवक्रश्च। धावञ् जवयुक्तो धवलः। पेशलः शुभ्रः सिन्दूरश्च। आकृतिगणत्वात् तरलकेवलकवलतरलानलजम्बलमर्दलकम्बलमुषलमगालमुसलकोमलताकुलकन्दलकदलीकुम्बलकमलकोमलमृदुलकारमलपिङ्गलबबवादयो ग्राह्याः।

दित्वादपि वाकालोऽपोत्येके। तमिविशिविडिमृणिकुलि-कपिपलिपञ्चिभ्यः कालन् ११५। तमालः। विशालः। बिडालः। मृणालम्। कुलालः। कपालम्। पलालम्। पञ्चालाः। पतेरङ्गच् पक्षिणि ११६। पतङ्गः। तरत्या २१)दिभ्यश्च। ११७॥ तरङ्गः। लवङ्गम्। बिडादिभ्यः कित् ११८। बिडङ्गः। मृदङ्गः। कुरङ्गः। बाहुलकादुत्वञ्च। सृवृञो वृद्धिश्च ११९। सारङ्गः। वारङ्गः खङ्गादिमुष्टिः। गन् गम्यद्योः १२०। गङ्गा। अङ्गः पुरोडाशः। छापूखड्भ्यः कित् १२१। छागः। पूगः। खङ्गः। बाहुलकात् षिड अनादरे गन् सत्वाभावश्च। षिङ्गः तरलः। "षिङ्गैरगयत ससम्भ्रममेवमेकेति" माघः। भृञः किन्नुट् च १२२। भृञो गन् कित् स्यात्तस्य नुट् च। "भृङ्गाः षिङ्गालिधूम्याटाः"। शृणातेर्ह्रस्वश्च १२३। शृङ्गम्। गण् शकुनौ १२४। नुट् चेत्यनुवर्त्तते। शार्ङ्गः। मुदिग्रोर्गग्गौ १२५। मुद्गः। गर्गः। अण्डन् कृसृभृवृञः १२६। करण्डः। सरण्डः पक्षी। भरण्डः स्वामी। वरण्डो मुखरोगः। शृदृ-भसोऽदिः १२७। शरत् १ "दरद्दृदयकूलयोः"। भसज्जघनम्। दृणातेः षुग् ह्रस्वश्च १२८। दृषत्। त्यजितनियजिभ्यो डित् १२९। त्यद्। तद्। यद्। सर्वादयः (पृ० ७५०)। एतेस्तुट् च १३०। एतद्। सर्त्तेरटिः १३१। "सरट् स्याद्वातमेघयोः"। वेदभाष्ये तु याभिः कृशानुर्मिति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम्। लङ्घेर्नलोपश्च १३२। लघट् वायुः। पारेरजिः १३३। पारक् सुवर्णम्। प्रथः कित्

---

(२१) तरत्यादिराकृतिगणः।

सम्प्रसारणञ्च १३४। पृथक्। स्वरादि (पृ०६८८पृ०) पाठादव्ययत्वम्। भियः षुक् ह्रस्वश्च १३५। भिषक्। युष्यसिभ्यां मदिक् १३६। युष सौत्रो धातुः। युष्मद्। अस्मद्। त्वम् अहम्। अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् १३७। एभ्यश्चतुर्दशभ्यो मन्। अर्मश्चक्षूरोगः। स्तोमः सङ्घातः। सोमः। होमः। सर्मो गमनम्। धर्मः। क्षेमं कुशलम्। क्षोमं प्रस्राव्यणि क्षौमञ्च। भाम आदित्यः। यामः। "वामः शोभनदुष्टयोः"। पद्मम्। यक्ष पूजायाम् यक्ष्मो रोगराजः। नेमः। जहातेः सन्वदालोपश्च १३८। "जिह्मः कुटिलमन्दयोः"। अवतेष्टिलोपश्च १३९। मन्प्रत्ययस्यायष्टिलोपः न प्रकृतेः अन्यथा ङिदित्येव ब्रूयात्। ज्वरत्वरेति (उ०१८८पृ०) ऊठौ (२२) तयोर्दीर्घे कृते गुणः। चादि उ० पृ० पाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न तेषामसत्वार्थत्वात्। वस्तुतस्तु स्वरादि(पृ०६८८पृ०)पाठादव्ययत्वम्। अवतीति ओम्। ग्रसेरा च १४०। ग्रामः। अविसिविसिशुषिभ्यः कित् १४१। ऊमम् (२३) नगरम्। स्यूमो रश्मिः। सिमः सर्वः। "शुष्मग्निसमीरयोः"। इषियुधीन्धिदसिश्याधूसूभ्यो मक् १४२। "इष्मः कामवसन्तयोः"। इषीतिपाठे दीर्घादिः। युध्मः शरो योद्धा च। इध्मः समित्। दस्मो यजमानः। श्यामः। धूमः। सूमोऽन्तरिक्षम्। बाहुलकादोर्मो व्रणः। युजिरुचितिजां कुश्च १४३। युग्मम्। रुक्मम्। तिग्मम्। हनेर्हि च १४५।

---

(२२) ज्वरत्वरेति सूत्रेण वकारात् पूर्वस्याकारस्योपधाया एकः, वकारस्यान्यस्तयोरूठौ सवर्णदीर्घे कृते गुण इति बोध्यम्।

(२३) व.ऊवदत्रूत्रे "उम, दुर्गान्तसा मते" त्युज्ज्वलदत्तः।

हिमम्। भियः षुग्वा १४५। भीष्म भीम। घर्मः १४६।
घृधातोर्मगुणश्च निपात्यते। ग्रीष्म १४७। ग्रसतेर्नि-
पातोऽयम्। प्रथेः षिवन् सम्प्रसारणञ्च १४८। पृथिवी।
षवगित्येके। "पृथवी पृथिवी पृथ्वी" इति शब्दार्णवः। अशू-
प्रुषिलटिकणिखटिविशिभ्यः क्वन् १४९। अश्वः। प्रुष
स्नेहनादौ "प्रुष्व स्यादृतुसूर्ययोः"। प्रुष्वा जालकणिका।
खट्वा पर्यङ्कभेदः फलञ्च। कणवन्यापम्। बाहुलकादित्त्वे किणव-
मपि। खट्वा। विश्वम्। इण्शीभ्या वन् १५०। एवो गन्ता
"ये च एवा मरुतः"। असत्त्वे निपातोऽयम्। "शेवं मित्राय
वरुणाय"। सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे
१५१। अकर्त्तर्यैते निपात्यन्ते। सृतमनेन विश्वमिति
सर्वम्। निपूर्वाद्घृषेर्गुणाभावोऽपि। निघृष्यतेऽनेन निघृष्वः
खुरः। रिष्वो हिंस्रः। लष्वो नर्त्तकः। लिष्व इत्यन्ये।
तत्रोपधाया इत्त्वमपि। शेतेऽस्मिन् सर्वमिति शिवः शम्भुः।
शीङो ह्रस्वत्वम्। पद्वो रथो भूर्लोकश्च। प्रह्वयत इति प्रह्वः।
ह्वेञ आकारवकारलोपः। जहातेरालोपो वा। ईषेर्वन्।
ईष्वः आचार्यः। इष्व इत्यन्ये। अस्वतन्त्रे किम् सर्त्ता सारकः।
बाहुलकाद्रुसर्तेः। रुस्वः। शेवयह्वजिह्वाग्रीवाप्वमीवाः १५२।
शेव इत्यन्तोदात्तार्थम्। यात्यनेन यह्वं रुम्वा हुगागमश्च।
लिहन्त्यनया जिह्वा। लकारस्य जः गुणाभावश्च। गिरत्य-
नया ग्रीवा। ईडागमश्च। आप्नोतीत्याप्वो वायुः। अमीवा
उदरक्रिमिः। वायुरित्यन्ये। कॄगॄशॄदृभ्यो वः १५३। कर्वः-
कामः आखुश्च। गर्वः। शर्वः। दर्वो राक्षसः। कनिन् युवृ-

षितक्षिराजिधन्विद्युप्रतिदिवः, १५४। यौतीति युवा। वृषा इन्द्रः। तक्षा। राजा। धन्वा मरुः। धन्वा शरासनम्। द्युवा सूर्य्यः। प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः। सप्यशूभ्यां तुट् च (२४)। सप्त। अष्ट। नञि जहातेः १५५। अहः। श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्जन्नर्य्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति १५६। एते त्रयोदश कनिन्नन्ता निपात्यन्ते। श्वयतीति श्वा। उक्षा। पूषा। प्लिह गतौ इकारस्य दीर्घत्वम्। प्लेहतीति प्लीहा कुक्षिव्याधिः। क्लिदू आर्द्रीभावे क्लिद्यति क्लेदा चन्द्रः। निपातनाद्गुणः। स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च। मुह्यन्त्यस्मिन्नाहते मूर्द्धा। मुहेरुपधाया दीर्घः धोऽन्तादेशो रमागमश्च। मज्जत्यस्थिषु मज्जा अस्थिसारः। अर्य्यपूर्वो माङ्। अर्य्यमा। विश्वं प्साति विश्वप्सा अग्निः। परिजायते परिज्मा चन्द्रोऽग्निश्च। जनेरुपधालोपो मश्चान्तादेशः। मातरि अन्तरिक्षे श्वयतीति मातरिश्वा। धातोरिकारलोपः। मह पूजायाम् हस्य घो वुगागमश्च। मघवा इन्द्रः।

इत्युणादिषु प्रथमः पादः।

कृहृभ्यामेणुः १ करेणुः। हरेणुर्गन्धद्रव्यम्। हनिकुषिनीरमिकाशिभ्यः क्थन् २। हथो विषमः। कुष्ठः। नीथो नेता। रथः। काष्ठम्। अवे भृञः ३। अवभृथः। उषिकुषिगार्त्तिभ्यस्थन् ४। ओष्ठः। कोष्ठम्। गाथा। अर्थः। बाहुलकात्

(२४) कनिन्युवृषीति सूत्रे प्राक्प्रत्ययनिर्द्देशादन्येभ्योऽपि भवतीत्युज्ज्वलदत्तेन दन्श दशने नलोपः दशन् एवं सप्तन्नादयस्तदाह सप्यशूभ्यामिति।

शोथः। सर्त्तेर्णित् ५। सार्थः समूहः। जृवृञ्भ्यामूथन् ६। जरूथं मांसम्। "वरूथो रथगुप्तौ ना"। पातृतुदिवचिरिचिसिचिभ्यस्थक् ७। पीथो रविर्घृतम्पीथम्। "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्बःस्त्रीरजःसु च विश्रुतमिति" विश्वः। तुत्थोऽग्निः। उक्थं सामभेदः। रिक्थम्। बाहुलकाद्दचेरपि। "रिक्थमृक्थन्धनं वसु"। सिक्थम्। अर्त्तेर्निरि ८। निर्ऋथः साम। निशीथगोपीथावगथाः ९। निशीथोऽर्धरात्रः रात्रिमात्रञ्च। गोपीथं तीर्थम्। अवगथः प्रातःस्नातः। गश्चोदि १०। उद्गीथः साम्नो भागविशेषः। समीणः ११। समिथो वह्निः संग्रामश्च। तिथपृष्ठगूथयूथप्रोथाः १२। तिजेर्जलोपः। तिथोऽनलः कामश्च। पृष्ठम्। गूथं विष्ठा। यूथं समूहः। "प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते"। स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् १३। हाचिंशदभ्यो रक् स्यात्। वलि (पृ४२१सू०सू०) यलोपः। स्फारम्। न्यङ्क्वादित्वात् (उ२०७सू०) कुत्वम्। तक्रम्। वक्रम्। शक्रः। क्षिप्रम्। क्षुद्रः। सृप्रश्चन्द्रः। तृप्रः पुरोडाशः। दृप्रः बलवान्। वन्द्रः (१) पूजकः। उन्द्री–उद्रो जलचरः। श्वित्रं कुष्ठम्। "वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे"। अजेर्वी। वीरः। नीरम्। पद्रो ग्रामः। मद्रो हर्षः देशभेदश्च। "मुद्रा प्रत्ययकारिणी"।

---

(१) वन्दिमन्दिचन्दीनामिदित्त्वान्नलोपाभावः।

चित्रं रोगो दरिद्रश्च। छिद्रम्। भिद्रं वज्रम्। मन्द्रः। चन्द्रः। पचाद्यचि (उ३।१सू०) चन्दोऽपि। "हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः"। दस्रोऽग्निः। दस्रः स्वर्वैद्यः। दभ्रः सम्रुद्रः स्वल्पश्च। वसेः सम्प्रसारणे।

## न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्। ८।३।११०।

रफपरस्य सकारस्य सृप्यादीनां सवनादीनाञ्च मूर्द्धन्यो न स्यात्। पूर्वपदादिति (उ५२७सू) प्राप्तः प्रतिषिध्यत इति वृत्तिमर्यादाभिप्रायः। तेन ग्रामिवसीति (प००६सू०) प्राप्तोऽपि न। उस्रो रश्मिः। उस्रा गौः। वास्रो दिवसः। वास्रं मन्दिरम्। शीरोऽजगरः। हस्रो मूर्खः। सिध्रः साधुः। शुभ्रम्। ससिरकः। सुस्रम्। वाहुलकात् अस्रु (२)। चक्रिरम्योः कर्मोपधायाः १४। चुक्रमम्लद्रव्यम्। रुस्रोऽरुणः। वौ कसेः १५। विकुस्रश्चन्द्रः। अमितम्योर्दीर्घश्च १६। आम्रम्। ताम्रम्। निन्देर्नलोपश्च १७। निद्रा। अर्द्देर्दीर्घश्च १८। आर्द्रम्। शुचेर्दश्च १९। शूद्रः। दुरीणो लोपश्च २०। दुःखेनेयते प्राप्यत इति दूरम्। कृतेश्छः क्रू च २१। कृच्छ्रम्। क्रूरः। रोदेर्णिलुक् च २२। रोदयतीति रुद्रः। बहुलमन्यत्रापि संज्ञाच्छन्दसोः। णिलुगित्येव। "वान्ति पर्णशुषो वातावान्ति पर्णमुचोऽपरे"‡। जोरी च २३। जीरोऽणुः। ज्यर्थेत्येके सुसूधागृधिभ्यः क्रन् २४। सुरः। सूरः। धीरः। गृध्रः। शुसिचिमीनान्दीर्घश्च २५। शु सौत्रः। शूरः। सीरम्। ची-

---

(२) अश्नोतेरपि रक् तेन अस्रं रुधिरमित्युज्ज्वलदत्तः।

‡ तत पर्णशुषो वान्ति ततो देय. प्रवर्षतीति शेषः।

रम्। मीरः समुद्रः। वाविन्धेः (१) २६। वीध्रम् विमलम्। वृधिवपिभ्यां रन् २७। वर्ध्रं चर्म्म। वप्रः प्राकारः। ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरा-मालाः २८। रवन्ता ऊनविंशतिः। निपातनाद्गुणाभावः। ऋज्रो नायकः। इदि इन्द्रः। अङ्गेर्नलोपः। अग्रम्। "वज्रोऽस्त्री हीरके पवौ"। डुवप् उपधाया इत्त्वम्। विप्रः। कुम्बिचुम्ब्योर्नलोपः। कुब्रमरण्यम्। चुब्रं मुखम्। क्षुर विलेखने रेफलोपः। अगुणः। क्षुरः। खुर छेदने नलोपो गुणाभावश्च। खुरः। भन्देर्नलोपः। भद्रम्। उच समवाये चस्य गः। उग्रः त्रिभी। भेरी। पत्ते लः। भेलो जलतरणद्रव्यम्। शुचेश्चस्य कः। शुक्रः पत्ते लः। शुक्लः। गुङ् वृद्धिः "गौरोऽरुणे सिते पीते"। वन सम्भक्तौ। वन्नो विभागी। इणो गुणाभावः। "इरा मद्ये च वारिणि"। मा माने माला। समि कसेरुकन् २९। कस गतौ सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः अस्थिरश्च। पचिनशोर्णुकन् कनुमौ च ३०। पचेः कः। पाकुकः सूपकारः। नशेर्नुम्। नंशुकः। भियः क्रुकन् ३१। भीरुकः। क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ३२। रजकः। इक्षुकुट्टकः। चरकः। चष भक्षणे। चषकः। भषकः। शुनकः। रमेरश्च लो वा ३३। रमको विलासी। लमकः। जहातेर्द्वे च ३४। जहकस्त्यागी कालश्च। ध्मो धम च ३५। धमकः कर्मकारः। हनो वध च ३६। वधकः। बहु-

(१) वौ उपपदे इन्धेः क्रन् स्यादित्यर्थः।

लमन्यत्रापि ३७। वृह विस्मापने। कुहक। कृतकम्। कृपेर्वृद्धिर्योटौचाम ३८। कार्षक-कृषकः। उदकश्च ३९ (४)। प्रपञ्चार्थम। वश्चिकृष्योः किकन् ४०। वृश्चिकः। कृषिकः। प्राङि पणिकषः ४१। प्रापणिकः पण्यविक्रयी। प्राकषिकः परदारोपजीवी। मुषेर्दीर्घश्च ४२। मूषिक आखुः। स्यमेः सम्प्रसारणञ्च ४३। चाद्दीर्घः। सीमिको वृक्षभेदः। क्रियइकन ४४। क्रयिकः क्रेता। आङि पणिपनिपतिखनिभ्यः ४५। आपणिकः। आपनिकः इन्द्रनीलः, किरातश्च। आपतिकः श्येनो दैवायत्तश्च। आखनिको मूषिको वराहश्च। श्यास्त्याहृञविभ्य इनच ४६। श्येनः। स्त्येनः। हरिणः। अविनोऽध्वर्युः। वृजेः किच्च ४७। वृजिनम्। अजेरज च ४८। वीभावबाधनार्थम। अजिनम। बहुलमन्यत्रापि ४९। कठिनम्। नलिनम। मलिनम। कुण्डिनम्। द्यतेः। "यत्प्रकाषि दिनम्, (५) दिवसोऽपि दिनम्। द्रुदक्षिभ्यामिनन् ५०। द्रविणम्। दक्षिणः। दक्षिणा। अर्त्तेः किदिच्च ५१। इरिणं शून्यम्। वेपितुह्योर्ह्रस्वश्च। ५२। विपिनम। तुहिनम्। तलिपुलिभ्याञ्च ५३। "तलिनं विरले स्तोके स्वच्छेऽपि तलिनन्त्रिषु"। पुलिनम्। गर्वेरत उञ्च ५४। गौरादित्वात् (पृ२२७सू०) ङीष्। गुर्विणी गर्भिणी। रुहेश्च ५५। रोहिणः। महेरिनण् च ५६। चादिनन माहिनम् महिनं राज्यम्। क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च ५७। वाक्। प्राट्। श्रीः। स्रवत्यती

---

(४) उन्दी क्लेदने इत्यस्मात् कुनि सिद्धम्।

(५) यदित्यादिस्मृते. यत्प्रभि प्रवर्त्तित दिनं खण्डितं यत् तद्देवानामित्यर्थः।

घृतादिकमिति स्रू: यज्ञोपकरणम्। इरू हिरण्यम्। कटप्रू: कामरूपी कीटश्च। "जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्"। आप्नोतेर्ह्रस्वश्च ५८। आप्। अपः। अद्भिः। अब्जः। परौ व्रजेः षश्च पदान्ते ५९। व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च। परिव्राट्। परिव्राजौ। ह्रुवः श्लुवच्च ६०। जूहूः। स्रुवः कः ६१। स्रुवम्। चिक् च ६२। इकार उच्चारणार्थः। क इत् कुत्वम्। स्रुक्। "स्रुवं स्रुचञ्च संमृड्ढि"। तनोतेरनश्च वः ६३। तनोतेश्चिक्प्रत्ययः अनोवशब्दादेशश्च। त्वक्। ग्लानुदिभ्यां डौः ६४। ग्लौः। नौः। च्विरव्ययम् ६५। डौरित्येव। ग्लौकरोति। कृन्मे जन्त इति (पू०२०४पृ०) सिद्धे नियमार्थमिदम् उणादिप्रत्ययान्तश्चान्त एवेति। रातेर्डैः ६६। राः। रायौ। रायः। गमेर्डोः ६७। "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः। स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु"। बाहुलकात् द्युतेरपि डोः। "द्यौः स्त्री स्वर्गान्तरिक्षयोः"। भ्रमेश्च डूः ६८। भ्रूः। चाद्गमेः। अग्रेगूः। दमेर्डोसिः ६९। दोः। दोषौ। पणेरिज्यादेश (१) वः ७०। वणिक्। स्वार्थेऽण्। "नैगमो वाणिजो वणिक्"। वशः कित् ७१ "उशिगग्नौ घृतेऽपि च"। भृज उच्च ७२। भूरिक् भूमिः। जसिसहोरुरिन् ७३। जसुरिर्वज्रम्। सहुरिरादित्यः पृथिवी च। सुयुरुवृञो युच् ७४। सवनश्चन्द्रमाः। यवनः। रवणः कोकिलः। वरणः। अशेः रश च ७५। अश्नोतेर्युच् स्यात् रशादेशश्च। रशना काञ्ची। जि-

---

(१) पणेरिजिप्रत्ययः स्यादादेशश्च व इत्यर्थः।

छायावाची तु दन्त्यसकारवान्। उन्देर्नलोपश्च ७६। ओदनः। गमेर्गश्च ७७। गमेर्युच् स्यादश्चादेशः। गगनम्। बहुलमन्यत्रापि ७८। युच् स्यात्। स्यन्दनः। रोचना। रञ्जेः क्युन् ७९। रजनम्। भूसूधूभ्रस्जिभ्यश्छन्दसि ८०। भुवनम्। सुवन आदित्य। धुवनो वह्निः। निधुवनम् सुरतम्। भ्रज्जनमम्बरीषम्। कृपृवृजिमन्दिनिधाञः क्युः ८१। किरणः। पुरणः समुद्रः। वृजनमन्तरिक्षम्। मन्दनं स्तोत्रम्। निधनम्। धृषेर्धिष च संज्ञायाम् ८२। (७) धिषणो गुरुः। धिषणा धीः। वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवत् ८३। अतिप्रत्ययान्ताः। पृष सेचने गुणाभावः। पृषन्ति। बृहत्। महान्। गमेर्जगादेशः। जगत्। संश्चत्तृपद्वेहत् ८४। एते निपात्यन्ते। पृथक्करणं शतृवद्भावनिवृत्त्यर्थम्। सञ्चिनोतेः सुट् इकारलोपः। संश्चत् कुहकः। तृपच्छत्रम्। विपूर्वाद्धन्तेष्टिलोप इतएत्वं च। "वेहत् गर्भोपघातिनी"। छन्दस्यसानच् शुजृभ्याम् ८५। शवसानः पन्थाः। जरसानः पुरुष। ऋञ्जिवृधिमन्दिसहिभ्यः कित् ८६। ऋञ्जसानो मेघः। वृधसानः पुरुष। मन्दसानोऽग्निर्जीवश्च। सहसानो यज्ञो मयूरश्च। अर्त्तेर्गुणः शुट् च ८७। अर्शसानोऽग्निः। सम्यानच् स्तुवः ८८। संस्तवानो वाग्मी। युधिबुधिदृशिभ्यः किच्च ८९। (८) युधानः। बुधानः। दृशानो लोकपालकः।

---

(७) अत्र हन्तेर्धुरश्चेत्यधिकं सूत्रं तेन धुरणः शब्द इत्युज्ज्वलदत्तः।

(८) अत्र मुचियुधिभ्यां सन्वच्चेति सूत्रान्तरं तेन मुमुचानः युयुधान इति सिद्धमित्युज्ज्वलदत्तः।

हुर्च्छेः सनो लुक् छलोपश्च ९० ॥ मुहुराणश्चन्द्रमाः। श्विते-
श्च ९१। श्विश्विदानः पुण्यकर्म्मा। तन्तृचौ शंसिचदा
दिभ्यः संज्ञायाञ्चानिटौ ९२। शंसेः चदादिभ्यश्च क्रमात्तृन्-
तृचौ स्त. तौ चानिटौ। शंस्ता स्तोता। शस्तरौ। शंस्तारः।
चदिः सौत्रो धातुः शकलीकरणे भक्षणे च। अनुदात्तेत्।
"वृक्ये चक्षदानमिति"मन्त्रात् "उक्षाणं वा वेहतं वा चदन्ते"
इति ब्राह्मणाच्च। "चत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्र-
जे"। बहुलमन्यत्रापि ९३। मन-मन्ता। हन-हन्ता इत्या-
दि। नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ९४।
न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च। नयते. षुग्गुणश्च। नेष्टा।
त्विषेरितोऽत्त्वम्। त्वष्टा। होता। पोता ऋत्विग्भेदः।
भ्राजतेर्जलोपः भ्राता। जायाम्माति जामाता। मान पू-
जायां नलोपः। माता। पातेराकारस्य इत्त्वम्। पिता। दुहे-
स्तृच इट् गुणाभावश्च। दुहिता। सावसे ऋन् ९५। स्वसा। यते-
र्वृद्धिश्च ९६। याता। "भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः पर-
स्परम्"। नञि च नन्देः ९७। न नन्दति ननान्दा। इह वृद्धि-
र्नानुवर्त्तत इत्येके। "ननन्दा तु स्वसा पत्युर्ननान्दा नन्दिनी च
सेति" शब्दार्णवः। दिवेर्ऋः ९८। देवा देवरः। "स्वामिनो
देवृदेवरौ"। नयतेर्डिच्च ९९। ना। नरौ। नरः। सव्ये स्थ
श्छन्दसि १००। अम्बाम्बेत्यत्र (उ३२४पृ०) स्थास्थिन्स्थृणामुप-
संख्यानम्। सव्येष्ठा सारथिः। सव्येष्ठरौ। सव्येष्ठरः। अर्त्ति-
सृधृधम्यम्यश्यवितृभ्योऽनिः १०१। अष्टभ्योऽनिप्रत्ययः स्यात्।
अरणिरग्नेर्योनिः। सरणिः। धरणिः। धमनिः। अमनि-

गतिः। अशनिः। अवनिः। तरणिः। बाहुलकात् रजनिः। अर्त्तिसृधृधम्यश्यवितृभ्योऽनिः। आङि शुषेः सनश्छन्दसि १०२। आशुशुक्षणिरग्निर्वातश्च कृषेरादेश्च चः १०३। चर्षणिर्जनः। अदेर्मुट् च १०४। अद्म-निरग्निः। वृतेश्च १०५। वर्त्तनिः। गोवर्द्धनस्तु चकारान्मुट् वर्त्मनिरित्याह। क्षिपेः किच्च १०६। क्षिपणिरायुधम्। अर्चि-शुचिहुसृपिछादिछर्दिभ्य इसिः १०७। अर्चिर्ज्वाला। इद-न्तोऽप्ययम्। "अग्नेर्भ्राजन्ते अर्चयः"। शोचिर्दीप्तिः। हविः सर्पिः। इस्मन् इति (उ३४८४) ह्रस्वः। छदिः पटलम्। छर्दिर्वम-नव्याधिः। इदन्तोऽपि "छर्यतीसारशूलवान्"। बर्हेर्नलोपश्च १०८। "बर्हिर्नां कुशशुष्मणाः"। द्युतेरिसिन्नादेश्च जः १०९। ज्योतिः। वसौ रुचेः सञ्ज्ञायाम् ११०। वसुरोचिर्यज्ञः। भुवः। कित् १११। भुविः समुद्रः। सहो धश्च ११२। सधिरनड्वान्। पिबतेस्थुक् ११३। "पाथिश्चक्षुःसमुद्रयोः"। जनेरुसिः ११४। जनुर्जननम्। मनेर्धश्छन्दसि ११५। मधु। अर्त्तिपॄवपियजित-निधनितपिभ्यो नित् ११६। अरुः। परुर्ग्रन्थिः। वपुः। यजुः। तनुः तनुषी तनूंषि। धनुरस्त्रियाम्। "धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति"। सान्तस्य उदन्तस्य वा रूपम्। "तपुः सूर्य्याग्निशत्रुषु"। एतेर्णिच्च ११७। आयुः आयुषी। चक्षेः शिच्च ११८। चक्षुः। मुहेः किच्च ११९। मुहुरव्य-यम्। बहुलमन्यत्रापि १२०। आचक्षुः। परिचक्षुः। कृगॄशॄ-वृचतिभ्यः ष्वरच् १२१। "कर्वरी व्याघ्ररक्षसोः"। गर्वरोऽ-हङ्कारः। शर्वरी रात्री। "वर्वरः प्राकृतो जनः"। चत्वरम्। नौ सदेः १२२। "निषद्वरस्तु जम्बालः"। निषद्वरी रात्रिः।

इत्युणादिषु द्वितीयः पादः।

छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः १। एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते। छिदिर् छद् अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च। छित्वरो धूर्त्तः। "छत्वरो गृहकुञ्जयोः"। धीवरः कैवर्त्तः। पीवरः स्थूलः। मीवरो हिंसकः। चिनोतेर्दीर्घश्च। चीवरम्भिक्षुकप्रावरणम्। तीवरो जातिविशेषः। नीवरः परिव्राट्। गाहतेर्ह्रस्वत्वम्। गह्वरम्। कटे वर्षादौ कट्वर व्यञ्जनम्। यमेर्दकारः। संयद्वरो नृपः। पदेः सम्पद्वर इत्येके। इण्षिञ्जिदीङुष्यविभ्यो नक् २। "इनः सूर्य्ये नृपे पत्यौ"। सिनः काणः। जिनोऽर्हन्। दीनः। उणः। ऊन। फेनमीनौ ३। एतौ निपात्येते। स्फायते फेनः। मीनः। कृषेर्वर्णे ४। कृष्णः। बन्धेर्ब्रधिबुधी च ५। ब्रध्नः। बुध्नः। धापॄवस्यज्यतिभ्यो नः ६। "धाना भृष्टयवे स्त्रियः"। पर्णम्पत्रम्। पर्णः किंशुकः। "वस्नो मूल्ये वेतने च"। अजेर्वीः। वेनः। अत्न आदित्यः। बाहुलकात् शृणोतेः श्रोणः पङ्गुः। लक्षेरट् च ७। लक्षेः स्वरादिण्यन्तान्नः स्यात्तस्याट्‌आगमश्च। चाम्मडित्येके। लक्षणं लक्ष्मणम् नाम्नि चिह्ने च। पुंसि रामभ्राता। "लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा"। वनेरिच्चोपधायाः ८। वेना नदी। सिवेष्टेर्यू च ९। दीर्घोच्चारणसामर्थ्यान्न गुणः। स्यून आदित्यः। बाहुलकात् केवलो नः। ऊठ अन्तरङ्गत्वाद्यण् गुणः। स्योनः। कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् १०। कर्णः। वर्णः। "जर्णश्चन्द्रे च वृक्षे च"। सेना। द्रोणः। पन्नो नीचैर्गतिः। अन्नमोदनः। स्वप्नो निद्रा।

पाकः शिशुः। शल्कं शकलम्। पल्कः पथिकः शरीरावयवश्च। मर्कः शरीरवायुः। नौ हः ४४। जहातेः कन् स्यान्नौ। निहाका गोधिका। नौ सदेर्डिच्च ४५। "निष्कोऽस्त्री हेम्नि तत्पले"। स्यमेरीट् च ४६। स्यमीको वाल्मीकः वृक्षभेदश्च। ईट् ह्रस्व इति केचित्। स्यमिकः। अजियुधुनीभ्यो दीर्घश्च ४७। "वीकः स्याद्वातपक्षिणोः"। यूका (२)। धूको वायुः। नीको वृक्षविशेषः। ह्रियो रश्च लो वा ४८। "ह्रीका ह्लीका त्रपा मता"। शकेरुनोन्तोन्त्युनयः ४९। उन उन्त उन्ति उनि एते चत्वारः स्युः। शकुनः। शकुन्तः। शकुन्तिः। शकुनिः। भुवो झिच् ५०। भवन्तिर्वर्त्तमानकालः। बाहुलकादवेश्च। अवन्तिः। वदेर्वदन्तिः "किंवदन्ती जनश्रुतिः"। कन्युच् क्षिपेश्च ५१। चाद्भुवः। क्षिपण्युर्वसन्तः इत्युज्ज्वलदत्तः। "भुवन्युः स्वामिसूर्ययोः"। अनुङ् नदेश्च (५२)। चात् क्षिपेः। नदनुर्मेघः। क्षिपणुर्वातः। कृदॄदारिभ्य उनन् ५३। "करुणो वृक्षभेदः स्यात करुणा च कृपा मता"। वरुणः। दारुणम्। त्रो रश्च लो वा ५४। "तरुणस्तलुनो युवा"। क्षुधिपिशिमिथिभ्यः कित ५५। क्षुधुनो म्लेच्छजातिः। पिशुनः। मिथुनम्। फलेर्गुक च ५६। फलगुनः पार्थः प्रज्ञाद्यण् (पृ०७२६ सू०) फाल्गुनः। अशेर्लशश्च ५७। लशुनम्। अर्जेर्णिलुक् च ५८। अर्जुनः। तृणाख्यायां चित् ५९। चित्त्वादन्तोदात्तः। अर्जुनं तृणम्। अर्त्तेश्च ६०। अरुणः। अजियमिशीङ्भ्यश्च ६१। "वयुनं देवमन्दिरम्"। यमुना। शयुनोऽजगरः। वृतॄवदिहनिकमि-

(१) यूका। केशस्थक्षुद्रजन्तुभेदः "यूकाभयेन न हि केशविमोक्षणं स्यादिति"।

कषिभ्यः सः ६२। वर्षम् "तर्षः। प्लवसमुद्रयोः"। वत्सः। वत्सं वक्षः। हंसः। "कंसोऽस्त्री पानभाजनम्"। कक्षवक्षवम्। पुषेरक्षोपधायाः ६३। प्लक्षः। मनेर्दीर्घश्च ६४। मांसम्। अशेर्देवने ६५। अक्षः। स्नुव्रश्चिकृत्यृषिभ्यः कित् ६६। स्नुषा। वृक्षः। कृत्समुद्रकम्। ऋक्षमक्षवम्। ऋषेर्जातौ ६७। "ऋक्षोऽद्रिभेदे भल्लूके" इति च। उन्दिगुधिकुषिभ्यश्च ६८। "उत्सः प्रस्रवणम्"। गुत्सः स्तवकः। कुक्षौ जठरम्। गृधिपण्योर्दकौ च ६९। गृत्सः कामदेवः। पक्षः। अशेः सरन् ७०। अक्षरम्। वसेश्च ७१। वत्सरः। सम्पूर्वाच्चित् ७२। संवत्सरः। कृधूमदिभ्यः कित् ७३। बाहुलकान्न षत्वम्। "कृसरः स्यात्तिलौदनम्"। धूसरः। मत्सरः। "मत्सरा मक्षिका ज्ञेया भम्भरालो ‡ च सा मता"। पतेः रश्च लः ७४। पत्सलः पन्थाः। तन्यृषिभ्यां क्सरन् ७५। "तसरः सूत्रवेष्टने"। ऋक्षरः ऋत्विक्। पीयुक्वणिभ्याङ्कालन् ह्रस्वः सम्प्रसारणञ्च ७६। पीयुः सौत्रः। पियालो वृक्षभेदः। कुणालो देशभेदः। कटिकुषिभ्याङ्काकुः ७७। कटाकुः पक्षी। कुषाकुरग्निः सूर्यश्च। सर्तेर्दुक् च ७८। "सृदाकुर्वातसरितोः"। वृतेर्वृद्धिश्च ७९। वार्ताकुः। बाहुलकादुकारस्य अत्वम्। वार्ताकम्। पर्देर्नित् सम्प्रसारणमल्लोपश्च ८०। "पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे"। सृयुवचिभ्योऽन्युजागूजक्नुचः ८१। अन्युच् आगूच् अक्नुच् एते क्रमात् स्युः। "सरण्युर्मेघवातयोः"। यवागूः। "वचक्नुर्विप्रशाश्मिना"। आनकः

---

‡ भ्रमराली पाठान्तरम्।

भीङ्भियः ८२। भयानकोऽजगरः। भयानकः। आण-कौलूधमिन्निधूजभ्यः ८३। लवाणकन्दानम्। धवाणको वातः। शिन्धाणकः श्लेष्मा। पृषोदरादित्वात् पक्षे कलोपः। "शिन्धाण नासिकामले"। धाणको दीनारभागः। उल्मुक-दर्विहोमिनः ८४। उष दाहे। षस्य लः मुकप्रत्ययश्च। "उल्-मुकं ज्वलदङ्गारम्"। दृणातेर्विः। दर्विः। जुहोतेर्मिनिः। होमी। ह्रियः कुक् रश्च लो वा ८५। ह्रीकुः ह्लीकुर्ल-ज्जावान्। हसिमृग्रिण् वाऽमिदमिलूपूधुर्विभ्यस्तन् ८६। दश-भ्यस्तन् स्यात्। तितुत्रेति (७३७८४०) नेट्। हस्तः। मर्तः। गर्त्तः। एतः कर्वुरः। वातः। भन्तः। दन्तः "लोतः स्याद-श्रुविक्रयोः"। "पोतो बालवहित्रयोः"। धूर्त्तः बाहुलकात्तुसे-र्दीर्घत्वम्। तूस्तम्पापम्धूलिर्जटा च। नजाप इट् च ८७। नापितः। तनिमृङ्भ्याङ्किच्च ८८। ततम्। मृतम्। अञ्जिघृसि-भ्यः क्तः ८९। अक्तम्। घृतम्। सितम्। दुतनिभ्यां दीर्घश्च ९०। दूतः। तातः। जेर्मूट् चोदात्तः ९१। जीमूतः। लोष्ट-पलितौ ९२। लुनातेः क्तस्तस्य सुट् धातोर्गुणः। लोष्टम् पलितम्। हृश्याभ्यामितन् ९३। हरितश्येतौ वर्णभेदौ। रुहे रश्च लो वा ९४। "रोहिता मृगमत्स्ययोः"। लोहित रक्तम्। पिशेः किच्च ९५। पिशितम्मांसम्। श्रुदक्षिस्पृहिगृहिभ्य आय्यः ९६। श्रवाय्यो यज्ञपशुः। दक्षाय्यो गरुडो गृध्रश्च। स्पृहयाय्यः गृहयाय्यो गृहस्वामी। दिधिषाय्यः ९७। दधाते-र्द्वित्वमित्त्वं षुक् च। "मित्र इव यो दिधिषाय्यः"। वृञ एण्यः ९८ वरेण्यः स्तुवः क्सेय्यश्छन्दसि ९९। "स्तुषेय्यम्पुरुवर्चसम्"

राजेरन्यः १००। राजन्यो वह्निः। शृरम्योश्च १०१। शरण्यम्। रमण्यम्। अर्त्तेर्निच्च १०२। अरण्यम्। पर्जन्यः १०३। पृषु-सेचने षस्य जः। "पर्ज्जन्यः शक्रमेघयोः"। वदेरान्यः १०४। "वदान्यस्त्यागिवाग्मिनोः"। अभिनक्षियजिबधिपतिभ्योऽत्रन् १०५। अमत्रम्भाजनम्। नक्षत्रम्। यजत्रः। बधत्रमायुधम्। पतत्रन्तनूरुहम्। गडेरादेश्च कः १०६। कडत्रं डलयोरेकत्वस्मरणात् कलत्रम्। वृञश्चित् १०७। वरत्रा चर्म्ममयी रज्जुः। सुविदेः कत्रन् १०८। "सुविदत्र कुटुम्बकम्"। कृतेर्नुम् च १०९। कृन्तत्रं लाङ्गलम्। भृमृदृशियजिपर्विपच्यमितमिनमिहर्य्यैभ्योऽतच् ११०। दशभ्योऽतच् स्यात्। भरतः। मरतो मृत्युः। "दर्शतः सोमसूर्य्ययोः"। यजत ऋत्विक्। पर्वतः। पचतोऽग्निः। अमतो रोगः। तमतस्तृष्णापरः। नमतः प्रह्वः। हर्य्यतोऽश्वः। पृषिरञ्जिभ्यां कित् १११। पृषतो मृगो विन्दुश्च। रजतम्। खलतिः ११२। स्खलतेः सलोपः अतच्प्रत्ययान्तस्य इत्त्वञ्च। खलतिर्निष्केशशिराः। शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ११३। सप्तभ्योऽथः स्यात्। शयथोऽजगरः। शपथः। रवथः कोकिलः। गमथः पथिकः पन्थाश्च। वञ्चथो धूर्त्तः। वन्दीतिपाठे वन्दते वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च। जीवथ आयुष्मान्। प्राणथो बलवान्। बाहुलकाच्छमिदमिभ्याम्। "शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः"। भृञश्चित् ११४। भरथो लोकपालः। रुदिविदिभ्यां ङित् ११५। रोदितीति रुदथः शिशुः। वेत्तीति विदथः। उपसर्गे वसेः ११६। आवसथो गृहम्।

संवसथो ग्रामः। अत्यविचमितमिनमिरभिलभिनभितपिप-
तिपनिपणिमहिभ्योऽसच् ११७। तयोदग्भ्योऽसच् स्यात्।
अततीत्यतसः वायुरात्मा च। अवतीत्यवसो राजा भानुश्च।
चमत्यस्मिन् चमसः सोमपानपात्रम्। ताम्यत्यस्मिन् तम-
सोऽन्धकारः। नमसोऽनुकूलः। "रभसो वेगहर्षयोः"।
रभसो धनं यशश्च। नभति नभ्यति वा नभस आकाशः।
तपस पक्षी चन्द्रश्च। पतस पक्षी। "पनसः कण्टकिफलः"।
पणसः पण्यद्रव्यम्। महस ज्ञानम्। वेञस्तुट् च ११८।
बाहुलकादात्वाभावः। वेतसः। वहियुभ्यां णित् ११९।
वाहसोऽजगरः। यावसस्तृणसङ्घातः। वयश्च १२०। वय
गतौ वायसः काकः। दिवः कित् १२१। दिवसम् दिव
सश्च कृशृशलिकलिगर्दिभ्योऽभच् १२२। करभः। शरभः।
शलभः। कलभः। गर्दभः। ऋषिवृषिभ्यां कित् १२३।
ऋषभः। वृषभः। रुषेर्नित्लुक् च १२४। रुष हिंसायाम्
अस्मादभच् नित्कित्स्यात् लुषादेशश्च। "लुषभो मत्तदन्तिनि"।
रासिवल्लिभ्यां च १२५ रासभः। वल्लभः। जविशिभ्या-
ऋच् १२६। जरन्तो महिषः। वेशन्तः पल्वलम्। रुहिन-
न्दिजीविप्राणिभ्यः षिदाशिषि १२७। रोहन्तो वृक्षभेदः।
नन्दन्तः पुत्रः। जीवन्त ओषधम्। प्राणन्तो वायुः। षित्वात्
ङीष्। रोहन्ती। तृभूवहिवसिभासिसाधिगडिमण्डिजि-
नन्दिभ्यश्च १२८ एभ्यो झच् स्यात् स च षित्। तरन्तः
समुद्रः तरन्ती नौका भवन्तः कालः। वहन्तो वायुः।
वसन्त ऋतुः। भासन्तः सूर्यः। साधन्तो भिक्षुः। गडिर्व-

टादित्वाण्णित्त्वं ङत्वः। अयामन्तेति (उ॰सू॰) णेरयः। गडयन्तो जलदः। मण्डयन्तो भूषणम्। जयन्तः शक्रपुत्रः। नन्दयन्तो नन्दकः। हन्तेर्मुट् हि च १२९। हेमन्तः। भन्देर्नलोपश्च १३०। भदन्त प्रव्रजितः। ऋच्छेररः १३१। ऋच्छरा वेश्या। बाहुलकाज्जर्जरझर्झरादय। अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् १३२। षड्भ्योऽरश्चित् स्यात्। अररङ्गपाठम्। कमर कामुक। भ्रमर। चमरः। देवरः। वासर। कुवः क्रारन् १३३। कुरर पक्षिभेद। अङ्गिमदिमन्दिभ्य आरन् १३४। अङ्गारम। मदारो वराह। "मन्दारः पारिजातकः"। गडे कड च १३५। कडारः। शृङ्गारभृङ्गारौ १३६। शृभृञभ्यामारन्नुम् गुक् ह्रस्वश्च। शृङ्गारो रसः। "भृङ्गारः कनकालुका"। कञ्जिमृजिभ्याञ्चित् १३७। कञ्जिः सौत्रः कञ्जारो मयूरः। मार्जारः। कमेः किदुच्चोपधायाः १३८। चिदित्यनुवृत्तेराररन्तोदात्तः। कुमारः। तुषारादयश्च १३९। तुषारः। कासार। सहार आम्रभेदः। दीङो नुट् च १४०। दीनारः सुवर्णाभरणम्। सर्त्तेरपः षुक् च १४१। सर्षपः। उषिकुटिदलिकचिखजिभ्यः कपन् १४२। "उषपो वह्निसूर्य्ययोः"। कुटपो मानभाण्डम्। दलपः प्रहरणम्। कचपं शाकपत्त्रम्। खजप घृतम्। क्षणेः सम्प्रसारणञ्च १४३। कुणपम्। कपश्चाक्रवर्म्मणस्य १४४। स्वरे भेदः। विटपपिष्टपविशिपोलपाः। १४५। चत्वारोऽमी कपन्प्रत्ययान्ताः। विट शब्दे विटपः। विशतेरादेः पः प्रत्ययस्य तुट् षत्वम्। पिष्टपं भुवनम्। विशतेः प्रत्ययादेरित्त्वम्। विशिप मन्दिरम्। वलतेः सम्प्र-

सारणम्। "उलप कोमलं तृणम्"। वृतेस्तिकन् १४६। वर्त्तिका। कृतिभिदिलतिभ्यः कित् १४७। कृत्तिका। भित्तिका भित्तिः। लत्तिका गोधा। इष्यशिभ्यान्तकन् १४८। इष्टका। अष्टका। इंणस्तशन्तशसुनौ १४९। एतशो ब्राह्मणः। स एव एतशाः। वीपतिभ्यान्तनन् १५०। वी गत्यादौ। वेतनम्। पत्तनम्। दृदलिभ्याभः १५१। दर्भः। "दल्भः स्याद्दृषिचक्रयोः"। अर्त्तिगृभ्याभन् १५२। अर्भः। गर्भः। इणः कित् १५३। इभः। असिसञ्जिभ्यां क्थिन् १५४। अस्थि। सक्थि। प्लुषिकुषिशुषिभ्यः क्सिः १५५। प्लुक्षिर्वह्निः। कुक्षिः। शुक्षिर्वातः। अशेर्नित् १५६। अक्षि। इषेः क्सुः १५७। इक्षुः। अवितस्तृतन्त्रिभ्य ईः १५८। अवीर्नारी रजस्वला। तरीर्नौः। स्तरीर्धूमः। तन्त्रीर्वीणादेर्गुणः। यापोः किद्द्वे च १५९। ययीरश्वः। "पपीः स्यात्सोमसूर्य्ययोः"। लक्षेर्मुट् च १६०। लक्ष्मीः।

इत्युणादिषु तृतीयः पादः।

---

वातप्रमी १। वातशब्दे उपपदे माधातोरीप्रत्ययः स च कित्। वातप्रमी। अयं स्त्रीपुंसयोः। ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्टुजिष्ठजिसन्स्यनिथिन्उल्यसासानुकः २। द्वादशभ्यः क्रमात् स्युः। अर्त्तेः कत्निच् यण्। "बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः"। तनोतेर्य्यतुच्। तन्यतुर्वायुः रात्रिश्च। अ-

ञ्जेरलिच्। अञ्जलिः। वनेरिष्टुच्। वनिष्टुः (१) स्थविरः। अञ्जेरिष्ठच्। अञ्जिष्ठो भानुः। अर्पयतेरिसन्। अर्पिसोऽग्रमांसम्। मदेः स्यन्। मत्स्यः। अतेरिथिन्। अतिथिः। अङ्गेरलिः। अङ्गुलिः। कौतेरसः। कवसः। अच इत्येके। कवचम्। यौतेरासः। यवासो दुरालभा। कृशेरानुक्। कृशानुः। शॄ: करन् ३। उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम्। शर्करा। पुषः कित् ४। पुष्करम्। कलश्च ५। पुष्कलम्। गमेरिनिः ६। गमिष्यतीति (२) गमी। आङि णित् ७। आगामी। भुवश्च ८। भावी। प्रे स्थः ९। प्रस्थायी। परमे कित् १०। परमेष्ठी। मन्थः ११। मन्थतेरिनिः कित्स्यात्। कित्त्वान्नकारलोपः। मन्थाः। मन्थानौ। मन्थानः। पतस्थ च १२। पन्थाः। पन्थानौ। खजेराकः १३। खजाकः पक्षी। बलाकादयश्च १४। बलाका। शलाका। पताका (३)। पिनाकादयश्च १५। पातेरित्त्वं नुम् च। "क्लीबपुंसोः पिनाकः स्यात् शूलशङ्करधन्वनोः"। तड आघाते। तडाकः (४)। कषिदूषिभ्यामीकन् १६। कषीका पक्षिजातिः। "दूषीका नेत्रयोर्म-

---

(१) वनेरिष्णुच् वनिष्णुरयाचनमित्युज्ज्वलदत्तीये पाठः।

(२) भविष्यति गम्यादय (उ४३१५०) इत्युक्तेरिह गमिष्यतीति।

(३) एवं मनाका हस्तिनी पवाका वात्या पटाका पक्षी इत्यादि।

(४) एवं भदाक: कल्याणं श्यैङः सुगागमे श्यामाकः नञ्पूर्वभातेः नभाक नभ। पिष संचूर्णने षकारस्य णत्वे युगागमे पिण्याकस्तिलकल्क.। गुवतेर्गुवाक इत्यादि।

लम्"। अनिहृषिभ्यां किच्च १७। अनीकम्। हृषीकम्। चङ्कण' कङ्कणच् १८। कण शब्दे अस्माद्यङ्लुगन्तादीकन् धातो: कङ्कणादेशश्च। "घण्टिकायां कङ्कणीका सैव प्रतिसरापि च"। शृपृवृञां द्विकक् चाभ्यासस्य १९। शर्शरीको हिंस्र.। पर्परीको दिवाकर'। वर्वरीक: कुटिलकेश:। फर्फरीकादयश्च। २०। स्फुर स्फुरणे। अस्मादीकन् धातो: फर्फरादेश:। फर्फरीकङ्किसलयम्। दर्दरीकं वादित्रम्। झर्झरीकं शरीरम्। तिन्तिडीको वृच्छ'द:। चरेर्नुम् च। चञ्चरीको भ्रमर:। मर्मरीको हीनजन:। कर्करीका गलन्तिका। पुणाते: पुण्डरीकं वादित्रम्। पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च। ईषे: किद्ध्रस्वश्च २१। इषीका शलाका। ऋजेश्च २२। ऋजीक उपहत:। सर्त्तेर्नुम् च २३। सृणीका लाला। मृड: कीकन्कङ्कणौ २४। मृडीको मृग:। मृडङ्कण' शिशु:। अलीकादयश्च २५। कीकनन्ता निपात्यन्ते। अल भूषणादौ अलीकं मिथ्या। विपूर्वात् व्यलीकं विप्रियच्छेदश्च। "वलीकम्पटलप्रान्ते" इत्यादि (५)। कॄतॄभ्यामीषन् २६। करीषोऽस्त्री शुष्कगोमये। तरीषस्तरीता। शॄपॄभ्यां किच्च २७। शिरीष। पुरीषम्। अर्जेर्ऋज च २८। "ऋजीषं पिष्टपचनम्"। अम्बरीष' २९। अयन्निपात्यते। अबि शब्दे "अम्बरीष: पुमान् भ्राष्ट्रम्"। अमरस्तु "क्लीबेऽम्बरीषं भ्राष्ट्रो ना"। कॄशॄपॄकटिपटिशौटिभ्य ईरन् ३०। करीरो वंशाङ्कुर'। शरीरम्। परीरम्फलम्। कटीर: कन्दरो जघनप्रदेशश्च। पटी-

---

(५) एव वाह्लीको गोवाह:। सुप्रतीकोऽग्निकोणदिग्गज इत्यादि।

रश्चन्दनः काण्डकः कामश्च। "शौटीरस्त्यागिवीरयोः"। ब्राह्मणादित्वात् ष्यञ्। शौटीर्यम्। वशः कित् ३१। उशीरम्। कशेर्मुट् च ३२। कश्मीरो देशः। कञ्ज उच्च ३३। कुरीरं मैथुनम्। घसेः किच्च ३४। घोरम्। गभीरगम्भीरौ ३५। गमेर्भः पचे नुम् च। विषाविह्वा ३६। स्यर्तेर्जहातेश्च विपूर्वाभ्यामप्रत्ययः। विषा बुद्धिः। विह्वा स्वर्गः। अव्यये इमे। पच एलिम च ३७। "पचेलिमो वह्निरव्योः"। शीङो धूक्लगवलञवालनः ३८। चत्वारः प्रत्ययाः स्युः। शीधु मद्यम। शील स्वभावः। शैवलः शैवालम्। बाहुलकात् वस्य पोऽपि। "शैवालः शैवलो न स्त्री शेपालो जलनीलिका"। मृकणिभ्यामूकोकणौ ३९। मरूको मृगः। काणूकः काकः। वलेरूकः ४०। वलूकः पची उत्पलमूलञ्च। उलूकादयश्च ४१। वले सम्प्रसारणमूकश्च। "उलूकाविन्द्रपेचकौ"। बावदूको वक्ता। भल्लूकः। शमेर्बुक् च। शम्बूको जलशुक्ति (६)। शलिमण्डिभ्यामूकण् ४२। शालूकं मूलविशेषः। मण्डूकः। नियो मिः ४३। नेमिः। अर्त्तेरूच्च ४४। ऊर्म्मिः। भुवः कित् ४५। भूमिः। अश्नोतेः रश च ४६ रश्मिः किरणो रज्जुश्च। दल्मिः ४७। दल विशरणे दल्मिरिन्द्रायुधम्। वी-ज्या-ज्वरिभ्यो निः ४८। बाहुलकात्सत्वम्। "वेणिः स्यात् केशविन्यासः प्रवेणी च स्त्रियामुभे"। ज्यानिः। जूर्णिः। (७)

---

(६) एवं भलतेर्वृद्धौ भालूका महेष्वस्य भत्वे मधूको वृक्षभेदः। एवं बम्बूकजम्बूकशालूकैलूकादयोऽत्र द्रष्टव्या इत्युज्ज्वलदत्तः।

(७) बाहुलकात् चौर्णिः क्रोर्णिरित्यादीत्युज्ज्वलदत्तः।

सृवृषिभ्यां कित् ४९। सृणिरङ्कुशः। "वृष्णि: क्षत्रियमेषयोः"। अङ्गेर्नलोपश्च ५०। अग्निः। वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ५१। वह्निः। श्रेणिः। श्रोणिः। योनिः। द्रोणिः। ग्लानिः। हानिः। तूर्णिः। बाहुलकात् म्लानिः (८)। घृणि-पृश्निपार्ष्णिचूर्णिभूर्णि ५२। एते पञ्च निपात्यन्ते। घृणिः किरणः। स्पृशतेः सलोपः। पृश्निरल्पशरीरः। पृषेर्वृद्धिश्च। पार्ष्णिः पादतलम्। चरेरुपधाया ऊत्वम्। चूर्णिः कपर्दकशतम्। बिभर्त्तेरूत्वम्। भूर्णिर्धरणी। वृदृभ्यां विन् ५३। वर्विर्घस्मरः। दर्विः। जृशृस्तृजागृभ्यः क्विन् ५४। जीर्विः पशुः। शीर्विर्हिंस्रः। स्तीर्विरध्वर्युः। जागृविर्नृपः। दिवो द्वे दीर्घश्चाभ्यासस्य ५५। "दीदिविः स्वर्गमोक्षयोः"। कृविघृष्विच्छविस्थविकिकीदिवि ५६। कृविस्तन्तुवायद्रव्यम्। घृष्विर्वराहः। छाद्येर्ह्रस्वत्वश्च। छविर्दीप्तिः। स्थविस्तन्तुवायः। दीव्यते किकीपूर्वात् किकीदिविश्चाषः। बाहुलकात् ह्रस्वदीर्घयोर्विनिमयः "चाषेण किकिदीविना"। पातेर्डति ५७। पतिः। शकेर्ऋतन् ५८। शकृत्। अमेरतिः ५९। अमतिः कालः। वहिवस्यर्त्तिभ्यश्चित् ६०। वहतिः। पवनः। "वसतिर्ग्टहयामिन्योः"। अरतिः क्रोधः। अञ्चेः को वा ६१। अङ्कतिः। अञ्चतिर्वातः। हन्तेरंह च ६२। हन्तेरतिः स्यादंहादेशश्च धातोः। हन्ति दुरितमनया अंहतिर्दानम्। "प्रादेशनविवपणमपवर्जनमंहतिः"। रमेर्नित् ६३। "रमतिः कालकामयोः"। सूङः क्रिः ६४। सूरिः।

(८) एत आङ्घोऽपि निपात्यत्र ह्रस्वत्वे णिनि क्षत्रियभेदः।

अदिशदिभूशुभिभ्यः क्रिन् ६५। अद्रिः। शद्रिः शर्करा। भूरि प्रचुरम्। शुभ्रिर्ब्रह्मा। वङ्क्र्यादयश्च ६६। क्रिन्नन्ता निपात्यन्ते। वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च। वप्रिः क्षेत्रम्। अङ्क्रिरङ्घ्रिश्च चरणः। तद्रि. सौत्रो धातुः। तन्द्रि-र्मोहः बाहुलकाद्गुणः। भेरिः। राशदिभ्यां त्रिप् ६७। रात्रिः। शत्रिः कुञ्जरः। अदेस्त्रिनिश्च ५८। चात्त्रिप्। अत्त्री। अत्त्रिणी। अत्त्रिणः। अत्त्रिः। अत्री। अत्रयः। पतेरत्त्रिन् ६८। पतत्त्रिः पक्षी। मृकणिभ्यामीचिः ७०। मरीचि.। कणीचिः पल्लवी निनादश्च। ऋयर्त्तरचित् ७१। ऋयोचिर्व्याधिः। वेञो डिच्च ७२। वीचिस्तरङ्गः। नञ्-समासे अवीचिर्नरकभेदः। ऋहनिभ्यामूषन् ७३। अरुषः सूर्य्यः। हनुषो राक्षसः। पुर. कुषन् ७४। पुर अग्रगमने पुरुषः। अन्येषामपीति (पू४।३।१ सू०ग्रा०) दीर्घः। पूरुष.। पृनहिकलिभ्य उषच् ७५। परुषम्। नहुषः। कलुषम्। पीयेरूषन् ७६। पीय इति सौत्रो धातुः। पीयूषम्। बाहुलकाद्गुणे "पेयूषोऽभिनवस्मयः"। मसेर्जनुम् च ७७। मञ्जूषा। गडेश्च ७८। गण्डूष.। गण्डूषा। अर्त्तेरुः ७९। अरुः शत्रुः। अरू। अररव.। कुटः किच्च ८०। कुटरुर्वस्त्रगृहम्। कित्त्वप्रयोजनश्चिन्त्यम्। शकादिभ्योऽटन् ८१। शकटोऽ स्त्रियाम्। कटिर्गत्यर्थः। कङ्कट. सन्नाह.। देवटः शिल्पी। करट इत्यादि (८) ककादिकडिकटिभ्योऽम्बच् ८२। करम्बं

---

(८) सरट कृकलास चरट कीटभेद कपटो माया कर्कटमर्कटपर्पटाः प्रसिद्धाथा कक्खट कठिन चपटचपटा तले, भयटः प्रसाद इत्यादि।

स्थामिश्रम्। कदिकडी सौवी। कदम्बो वृक्षभेदः। कडम्बोऽग्रभागः। कटम्बो वादित्रम्। कदेर्णित्पक्षिणि ८३। "कादम्बः कलहंसः"। कलिकर्दोरमः ८४। कलमः। कर्दमः। कुणिपुल्भ्यो किन्दच् ८५। कुण शब्दोपकरणयोः। कुणिन्दः शब्दः। पुलिन्दो जातिविशेषः कुपेर्वा वश्च ८६। कुपिन्द-कुविन्दौ तन्तुवाये। नौ षञ्जेर्घथिन् ८७। निषङ्गथिरालिङ्गकः। उदयर्त्तेश्चित् ८८। उदरथिः समुद्रः। सर्त्तेर्णिच्च ८९। सारथिः। खर्जिपिञ्जादिभ्य ऊरोलचौ ९०। खर्जूरः। कर्पूरः। वल्लूरं शुष्कमांसम् (१०)। पिञ्जूलं कुशवर्त्तिः। लङ्गेर्वृद्धिश्च। लाङ्गूलम्। कुसूलः (११)। कुवश्चट् दीर्घश्च ९१। कूचो चित्रलेखनिका। समीणः ९२। समीचः समुद्रः। समीची हरिणी। सिवेष्टेकू च ९३। सूची दर्भाङ्कुरः। सूची। शमेर्वन् ९४। शम्बो मुसलम्। उल्बादयश्च ९५। वन्नन्ता निपात्यन्ते। उच समवाये। चस्य लत्वम्। गुणाभावश्च। उल्बं गर्भाशयः। शुल्वं ताम्रम्। निम्बः। बिम्बम् (१२) स्थ स्तोऽम्बजवकौ ९६। तिष्ठतेरम्बच् अवक एतौ स्तस्तादेशश्च। "स्तम्बो गुच्छस्तृणादिनः"। स्तवकः पुष्पगुच्छः। शाशपिभ्यां ददनौ ९७। "शादो जम्बालशष्पयोः"। शब्दः। अब्दादयश्च

(१०) ए। भुस्तर शालूर मल्लूर कस्तूर्यादय ऊरान्ता निपात्यन्ते।

(११) ए। कद्दलोऽस्त्री स्त्रीगात्राच्छादनः तमिर्बुगदीर्घते ताम्बूलं शृ हिंसायां दगागतो एडिश्च शार्दूलः। दुनोते कूक् दुकूल एवमन्येऽपीत्युज्ज्वलदत्तः।

(१२) नयति वत्योर्भुगागमे ह्रस्वे च निम्बबिम्बे एवं धन्वजम्बादयः।

९८। अवतीत्यब्दः (१३)। कौबेर्नुम॰। कुन्दः। वलिमलितनिभ्यः कयन् ९९। वलयम्। मलयः। तनयः। हृञोः हुग्दुकौ च१००। हृषयमाश्रयः। हृदयम्। मिपीभ्यां रुः१०१। मेरुः। पेरुः सूर्य्यः। बाहुलकात् पिबतेरपि। "सम्वत्सरविपुः पारुः पेरुर्व्वासीद्दिनप्रणीः"। जत्र्वादयश्च १०२। (१४)। जत्रु। जत्रुणी। अश्रु। अश्रुणी। रुशातिभ्यां क्रुन् १०३। रुरुर्मृगभेदः। शातयतीति शत्रुः। घटादौ (७०६७०) पाठाद्ध्रस्वत्वम्। जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वनत्वण्क्विन् शक् स्य ड डटाटाचः १०४। "जनित्वौ मातापितरौ"। दात्वः दाता। च्यौत्नः गन्ता अण्डजः चौणपत्ययश्च। सृणिः अङ्कुशः चन्द्रः सूर्य्यो वायुश्च। वृशः आर्द्रकं मूलकञ्च। मत्स्यः। षण्ढः। डित्त्वाट्टिलोपः। नमतीति नटः शैलूषः। बिभर्त्ति भरटः कुलालो भृतकश्च। अन्येभ्योऽपि दृश्यन्ते१०५। पेत्वममृतम्। भृशम् (१५) कुसेरुम्भोमेदेताः १०६। कुसुम्भम्। कुसुमम्। कुसीदम्। कुसितो जनपदः। सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः १०७। सनोतेरसिप्रत्यय उपधावृद्धिः। सानसिर्हिरण्यम्। वृञो नुक् च। वर्णसिर्जलम्। पॄ पर्णसिर्जलगृहम्। तड आघाते

---

(१३) एवं वृन्दं समूहः, कन्दं मूलं, तुन्दं स्थूलोदरं, ककन्दो नृगभेदः।

(१४) शिग्रुः शोभाञ्जनं वितद्रुर्नदी कद्रुर्वर्णभेदः अश्रु नयनजलं चमूरुप्रभृतयोऽप्यत्रैव द्रष्टव्या इत्युज्ज्वलदत्तः।

(१५) एवं कच बन्धने शक् कच्छः कूलम्, सरटो वातः, ध्यै ध्यानं चिन्ता, होता यजमानः, लुनिर्व्रीहिः एवमन्येऽपीत्युज्ज्वलदत्तः।

तण्डुल। अकि लक्षणे इश्च। अङ्गः। चषेरालच्। "चषालो यूपकटकः"। इल्वलो दैत्यभेदः। पल्वलम्। त्रि धृषा
णय ऋकारस्य इकारः। धिष्ण्यम्। शलेय्यं। "शल्यं वा पुंसि
शङ्कौ"। मृशक्यविभ्यः क्लः १०८। मूलम्। शक्लः प्रियंवदे।
अक्लोरसः। बाहुलकादमेः। अम्लः। माछाशसिभ्यो यः १०९।
माया। छाया। सस्यम्। बाहुलकात्सनोतेः। "सव्यन्द-
क्षिणवामयोः"। जनेर्यक् ११०। ये विभाषा (६।२।४३)। जन्यं
युद्धम्। जाया भार्या। अघ्न्यादयश्च १११। यगन्ता निपात्यन्ते।
हन्तेर्यक अडागमः उपधालोपश्च। अघ्न्या माहेयी।
अघ्न्यः प्रजापतिः। कनी दीप्तौ। कन्या। बवयोरैक्यम्।
वन्ध्या (१६)। स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् ११२। स्नावा
वसिकः। मद्वा शिवः। पद्वा पन्थाः। "अर्वा तुरङ्गगर्ह्ययोः"।
पर्व ग्रन्थिः प्रस्तावश्च। शक्वा हस्ती। ङीब्रेफौ। शक्वरी अ-
ङ्गुलिः। शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ११३। शीवा
अजगरः। कृश्वा शृगालः। रुहा वृक्षः। जित्वा जेता।
क्षित्वा वायुः। सृत्वा प्रजापतिः। धृत्वा विष्णुः। ध्याप्योः
सम्प्रसारणञ्च ११४। धीवा कर्मकरः। पीवा स्थूलः। अदेर्ध च
११५। अध्वा। प्रे ईरशदोस्तुट् च ११६। प्रेत्वा, प्रशत्वा च
सागरः। प्रेत्वरी प्रशत्वरी च नदी। सर्वधातुभ्य इन् ११७।
पचिरग्निः। तुडिः। तुण्डिः। वलिः। वटिः। यजिः।
देवयजिः। काशत इति काशिः। यतिः मल्लिः। मल्ली।

(१६) एव मभि धाजो यक् आतो लोपः मध्या कौतर्डुकि कुडं भिक्षिः
मनो धन मध्यामित्यादि।

केलिः। मसी परिणामे। मसिः। बाहुलकाद्गुणः। कोटिः। हेलिः। बोधिः। नन्दिः। कलिः। इपिषिकुहिवृति-विदिच्छिदिकीर्तिभ्यश्च ११८। "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ। चन्द्रे कीरे प्लवङ्गे च यमे वाते च कीर्त्तितः"॥ पेषिर्वज्रम्। रोहिर्व्रती। वर्त्तिः। वेदिः। छिदिः छेत्ता। कीर्त्तिः। इगुपधात्कित् ११९। कृषिः। ऋषिः। शुषिः। लिपिः। बाहुलकाद्दत्वे लिबिः। तूल निष्कर्षे। तूलिः तूली कूर्चिका। भ्रमेः सम्प्रसारणञ्च १२०। भृमिर्वातः। बाहुलकाद्भ्रमिः। क्रमितमिशतिस्तम्भामत इच्च १२१। क्रिमिः। सम्प्रसारणानुवृत्तेः। कृमिरपि। तिमिर्मत्स्य भेदः। "शितिर्मेचकशुक्लयोः"। स्तिम्भिः समुद्रः। मनेरुच्च १२२। मुनिः। वर्णेर्वलिश्चाहिरण्ये १२३। वर्णिः सौत्रः अस्य वलिरादेशः। "करोपहारयोः पुंसि वलिः प्राण्य-ङ्गजे स्त्रियाम्"। हिरण्ये तु वर्णिः सुवर्णम्। वसिवपि-यजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् १२४ "वासिः छेदनवस्तुनि"। वापिः वापी। याजिर्यष्टा। राजिः राजी। व्राजिर्वातालिः। सादिः सारथिः। "निघा-तिर्लोहघातिनी"। वाशिरग्निः। वादिर्विद्वान्। वारि-र्गजबन्धनी। जले तु क्लीबम्। बाहुलकात् "वारिः पथिक-संहतौ"। णहो भश्च १२५। "नाभिः स्यात् क्षत्रिये पुंसि प्राण्यङ्गे तु स्त्रियाम्" पुंस्यपीति केचित्। कृषेर्वृद्धिश्छन्दसि १२६। कार्षिः। शः शकुनौ १२७। शारिः शारिका। कञः उदीचाङ्कारुषु १२८। कारिः शिल्पी। जनिघसिभ्यामिण्

१२८। जनिर्जननम्। घसिर्भक्ष्यमग्निश्च। अज्यतिभ्याञ्च १३०। आजिः सङ्ग्रामः। आतिः पक्षी। पादे च १३१। पदाजिः। पदातिः। अशिपणाय्योरुडायलुकौ च १३२। अश्नोतेरुट् राशिः पुञ्जः। पणायतेरायलुक्। पाणिः करः। वातेर्डिच्च १३३। विः पक्षी स्त्रियां वीत्यपि। प्रे हरते: कूपे १३४। प्रहिः कूपः। नौ व्यो यलोपः पूर्वस्य च दीर्घः १३५। व्येञ इण् स्यात् यलोपश्च नेर्दीर्घः। नीविः। नीवीवस्त्रग्रन्थौ मूलधने च। समाने ख्यः स चोदात्तः १३६। समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात् स च डिच्च यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च। समानं ख्यायते जनैरिति सखा। आङि श्रिहनिभ्यां ह्रस्वः १३७। इण् स्यात् स च डित् आङो ह्रस्वश्च। "स्त्रियः पाल्यश्रिकोटयः"। 'सर्पे। वृत्रासुरेप्यऽहि"। अच इः १३८। रविः। पविः। तरिः। कविः। अरिः। अलिः। खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च १३९। खनिः। कषिर्हिंस्रः। अजिः। असिः। वसिर्वस्त्रम् वनिरग्निः। सनिर्भक्तिर्दानञ्च। ध्वनिः। ग्रन्थिः। चलिः पशुः। वृतेश्छन्दसि १४०। वर्त्तिः। भुजेः किच्च १४१। भुजिः। कृगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च १४२। इः कित्स्यात्। किरिर्वराहः। "गिरिर्गौरवाक्षिरोगयोः"। गिरिणा काणः गिरिकाणः। शिरिः शलभो हन्ता च। पुरिर्नगरं राजा नदी च कुटिः शाला शरीरञ्च। भिदिर्वज्रम्। छिदिः परशुः। कुडिकम्प्योर्नलोपश्च १४३। कुडि दाहे। कुडिर्देहः। कपिः। सर्व-

धातुभ्यो मनिन् १४४। क्रियत इति कर्म। चर्म। भस्म। जन्म। शर्म। स्थाम बलम्। इस्मन्निति (उ३४०सू०) ह्रस्वः। छद्म। सुत्रामा। बृंहेर्नोऽच्च १४५। नकारस्याकारः। "ब्रह्म तत्त्वन्तपो वेदो ब्रह्मा विप्रः प्रजापतिः"। अशिशकिभ्यां छन्दसि १४६। अश्मा। शक्मा। हृभृधृसृस्तृशृभ्य इमनिच् १४७। हरिमा कालः। भरिमा कुटुम्बम्। धरिमा रूपम्। सरिमा वायुः। स्तरिमा तल्पम्। शरिमा प्रसवः। जनिमृङ्भ्यामिमनिन् १४८। जनिमा जन्म। मरिमा मृत्युः। वेञः सर्वत्र १४९। छन्दसि भाषायाञ्चेत्यर्थः। वेमा तन्तुवायदण्डः। अर्द्धर्चादिः। सामनी वेमनी इति वृत्तिः। नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन् १५०। सप्त अमी निपात्यन्ते। म्नायतेऽनेनेति नाम। सिनोतेर्दीर्घः। सीमा। सीमानौ। सीमानः। पक्षे डाप्। सीमे। सीमाः। व्येञाऽन्त्यस्योत्त्वं गुणः। व्योम। रौतेः। रोम। लोम। पाप्मा पापम्। ध्यामा परिमाणन्तेजश्च। मिथुने मनिः १५१। उपसर्गक्रिययोः सम्बन्धो मिथुनम्। स्वरार्थमिदम्। सुशर्मा। सातिभ्याम्मनिन्मनिणौ १५२। स्यति—साम सामनी। आत्मा। हनिमशिभ्यां सिकन् १५३। "हसिका हंसयोषिति"। मक्षिका। कारन् १५४। कवरः। गिर उडच् १५५। गरुड़ः। इन्देः कमिन्नलोपश्च १५६। इदम्। कायतेर्डिमः १५७। किम्। सर्वधातुभ्यः ष्ट्रन् १५८। वस्त्रम्। अस्त्रम्। शस्त्रम्। इस्मन्निति (उ३४०सू०) छत्त्रम्। छादना च्छत्रम्। भ्रमजिगमिनमिहृ-

निविश्यमां वृश्चिश्च १५९। श्राष्ट्रं। गान्त्रं शकटम्। नान्त्र स्तो-
त्रम् हान्त्रं मरणम्। वेष्ट्रं पिष्टपम्। आष्ट्रमाकाशम्। दिवे-
र्द्युश्च १६०। द्यौत्रं ज्योतिः। उषिखनिभ्यां कित् १६१। उष्ट्रः।
खात्रम् खनित्रञ्जलाधारश्च। सिचिमुर्च्योष्टेरूव् १६२।
सत्रम्। मूत्रम्। अमिचिमिदिशसिभ्यः क्त्रः १६३।
अन्त्रम्। चित्रम् मित्रम्। शस्त्रम्। पुवा ह्रस्वश्च १६४।
पुत्र. स्त्रायतेड्ट् १६५। स्त्री। गुधृवीपचिवचियमिस-
दिक्षदिभ्यस्त्र १६६। "गोत्रं स्यान्नामवंशयो." । गोत्रा पृथि-
वी। धर्त्र गृहम्। वेत्रम्। पक्त्रम्। वक्त्रम्। यन्त्रम्। सत्त्रम्।
क्षत्त्रम्। हुयामाश्रुभसिभ्यस्त्रन् १६७। होत्रम्। यात्रा।
मात्रा। श्रोत्रम्। भस्त्रा। गमेरा च १६८। गात्रम्। दादि
भ्यश्छन्दास १६९। दात्रम्। पात्रम्। भूवादिगृभ्यो णित्रन्
१७०। भावित्रम्। वादित्रम्। गारित्रमादनम्। चरेर्वृत्ते
१७१। चारित्रम्। अशित्रादिभ्य इत्रोत्रौ १७२। अशि-
त्रम्। वहित्रम्। धरित्री मही। लङ् एवमादिभ्य उत्रः।
लोत्रम्पहरणम्। वृञ् वरत्र प्रावरणम्। अमेर्द्विषति
चित् १७३। आमत्र शत्रु। आ समिण्णिकषिभ्याम्
१७४। सम्पूर्वादिण. निपूर्वात्कषेश्चा. स्यात्। स्वरादित्वा-
दव्ययत्वम्। समया। निकषा। चित. कण. कश्च १७५।
बाहुलकादगुण.। "चिक्कण मसृण स्निग्धम्"। सूचे. स्मन्
१७६। सूक्ष्मम्। पातेडुम्सुन् १७७। पुमान्। रुचिभुजि-
भ्याङ्किष्यन् १७८। रुचिष्यमिष्टम्। भुजिष्या दास.। वसेस्तिः
१७९। "वास्तिनाभेरधो द्वया."। "वस्तय स्युर्दशा सूत्रे"।

बाहुलकात् शासः। शास्तिः राजदण्डः। विन्ध्याख्यमगम- स्यतीति अगस्तिः। शकन्ध्वादि. ४७पृ०)। सावसेः १८०। स्वस्ति। स्वरादिपाठादव्ययत्वम्। वौ तसेः १८१। वितस्तिः। पदिप्रथिभ्यान्नित् १८२। पत्तिः। प्रथितिः। तितुत्रेष्वग्रहादी- नामितीट् (७४५पृ०)। दृणातेर्ह्रस्वश्च १८३। दृतिः। कृतृकृपि- भ्यः कीटन् १८४। किरीटम्। तिरीटं सुवर्णं शिरोवेष्टनञ्च। "कृपीटं कुक्षिवारिणोः"। रुचिवचिकुचिकुटिभ्यः कितच् १८५। रुचितं मिष्टम्। उचितम्। कुचितं परिमितम्। कुटितं कुटिलम्। कुटिकुषिभ्यां क्मलन् १८६। कुट्म- लम्। कुष्मलम्। कुषेर्लश्च १८७। कुल्मलम्पापम्। सर्वधातुभ्योऽसुन् १८८। चेतः। सरः। पयः। सदः (१७)। रपेरत एच्च १८९। रेपोऽवद्यम्। अशेर्देवने युट्च। १९०। देवने युतौ। यशः। उब्जेर्बले बलोपश्च १९१। ओजः। श्वेः सम्प्रसारणञ्च १९२। शवः। शवसी। बलप- र्य्यायोऽयम्। श्रयतेः स्वाङ्गे शिरः किच्च १९३। श्रयतेः शिर आदेशोऽसुन् किच्च। शिरः। शिरसी। अर्त्तेरुच्च १९४। उरः। व्याधौ शुट् च १९५। अर्शो गुदव्याधिः। उद- के नुट्च १९६। अर्त्तेरसुन् स्यात्तस्य च नुट्। अर्णः। अर्ण- सी। इण आगसि १९७। एनः। रिचेर्धने घिच्च १९८। चात्प्रत्ययस्य नुट्। घित्त्वात्कुत्वम्। रेक्णः सुवर्णम्। चायते-

(१७) एवं वर्चं पुरीषम् रक्षोराक्षसः रोधस्तटं रोदसी द्यावाभूम्यौ वयः कालकृतावस्था अनोभक्तं तमोऽन्धकारः राहुश्च महस्तेजः सहो बलम् सहा मार्गशीर्षं, तपस्तपस्या, तपा माघ, मासश्चन्द्रो मासश्च इत्यादयः।

रवे कश्च १९९। त्वनो भक्तम्। हृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च २००। वर्पो रूपम्। शेपो गुह्यम् (१८)। स्रुरीभ्यां तुट् च २०१। स्रोतः। रेतः। पातेर्बले जुट् च २०२। पाजः। पाजसी। उदके थुट् च २०३। पाथः। अन्ने च २०४। पाथो भक्तम्। अदेर्नुम्धौ च २०५। अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च। अन्धोऽन्नम्। स्कन्देश्च स्वाङ्गे २०६। स्कन्धः। स्कन्धसी। आपः कर्माख्यायाम् २०७। कर्माख्यायां ह्रस्वो नुट् च वा। अप्नः अपः। बाहुलकात्। आपः। आपसी। रूपे जुट् च २०८। अजो रूपम्। उदके नुम्भौ च २०९। अम्भः। नहेर्दिवि भश्च २१० नभः। इण आगोऽपराधे च २११। "आगः पापापराधयोः"। अमेर्हुक् च २१२। अंहः। रमेश्च २१३। रंहः। देशे ह च २१४। रमन्तेऽस्मिन् रहः। अञ्च्यञ्जियुजिभृजिभ्यः कुश्च २१५। एभ्योऽसुन् कवर्गश्चान्तादेशः। "अङ्कश्चिह्नशरीरयोः"। अङ्कः पक्षी। योगः समाधिः। भर्गस्तेजः। भूरञ्जिभ्यां कित्। २१६। भुवः। रजः। वसेर्णित् २१७। वासो वस्त्रम्। चन्देरादेश्च छः २१८। छन्दः। पचिवचिभ्यां सुट् च २१९। "पक्षमी तु स्मृतौ पक्षौ"। वक्षो हृदयम्। वहिहाधाञ्भ्यश्छन्दसि २२०। वक्षाः अनड्वान्। हासाश्चन्द्रः। धासाः पर्वत इति प्राञ्चः। वस्तुतस्तु णिदित्यनुवर्त्तते न तु सुट्। तेन वहेरुपधावृद्धिः। इतरयोरातो युगिति (उ२७०पृ०)युक्। "धौणाधषण

---

(१८) शेपशब्दोऽदन्तोऽपि मेढ्रवाची शुन इव शेपो यस्य स शुनिः। अतएव केचित् फ चेति पठित्वा शेफो मेढ्र वर्फो रूपमित्याहुः।

नृषाहसा"। "श्रोता हवं गृणत स्तोमवाहा:" विश्वो विहाया:। "वाजम्भरो विहाया:"। "देवो नय पृथिवीं विश्वधाया:"। "अधारयत् पृथिवीं विश्वधायसम्"। "धर्णसिम्भूरिधायस" मित्यादि। इण आसि: २२१। अया. वह्निः। स्वरादिपाठादव्ययम्। मिथुनेऽसि पूर्ववच्च सर्वम् २२२। उपसर्गविशिष्टो धातुर्मिथुनस्तचासुनोऽपवादोऽसि स्वरार्थ:। * नञि हन एह च २२३। अनेहा:। अनेहसौ। विधाञो वेध च २२४। विदधातीति वेधा:। नुवो धुट् च २२५। नोधः। गतिकारकोपपदयो: पूर्वपदप्रकृतिस्वरत्वञ्च २२६। असि (१९) स्यात्। सुतपा:। जातवेदा:। गतिकारकोपपदात् कृत् (उ५६घ्ठ०) इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे (२०) प्राप्ते तदपवादार्थमिदम्। चन्द्रे मो डित् २२७। चन्द्रोपपदान्माङोऽसि स्यात्स चडित्। चन्द्रमा:। वयसि धाञ: २२८। वयोधास्तरुण:। पयसि च २२९। पयोधा: समुद्रो मेघश्च। पुरसि २३० च। पुरोधा:। पुरूरवा: २३१। पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते। चक्षेर्बहुलं शिच्च २३२। नृचक्षा:। उष: कित् २३३। उष:। दमेरुनसि २३४। "सप्तार्चिर्दमुना:"। अङ्गिरा: २३५। अङ्गतेरसि: इरुडागमश्च अप्सरा: २३६। सर्त्तेरप्पूर्वादसि:। प्रायेणायं भूम्नि। अप्स-

---

* सुपया· स्तोपु सयो·। सुपेशा इत्युज्ज्वलदत्त.।

(१९) प्रादिश्चिवडाचो गतिसंज्ञा गतौ कारके चोपपदे धातोरसि. पूर्वपदप्रकृतिस्वरत्वं चेत्यर्थ।

(२०) अनुदात्तं पदमेकवर्जम् (उ५१८घ्ठ०) इत्यधिकारात्तथात्वम्।

रसः। विदिभुजिभ्यां विश्वे २३७। विश्ववेदाः। विश्वभोजाः। वशे. कनसिः २३८। सम्प्रसारणम्। उशना.।

इत्युणादिषु चतुर्थः पादः।

---

अदि भुवो डुतच् १ अद्भुतम्। गुधेरूमः २ गोधूमः। मसेरूरन् ३ मसूरः। प्रथमे पादे असेरुरन्मसेश्चेत्यत्र (उ३८४पृ०) व्याख्यातम्। स्थः किच्च ४ स्थूरो मनुष्यः। पातेरतिः ५। पातिः स्वामी। सम्पातिः पक्षिराजः। वातेर्नित् ६। "वातिरादित्यसोमयोः"। अर्त्तेश्च ७। अरतिरुद्वेगः। तृहेः क्नो हलोपश्च ८ तृणम्। तृजलुटितनिताडिभ्य उलन् तण्डश्च। ९। त्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः। दन्सेः टटनौ न आ च १०। "दासः सेवकशूद्रयोः"। दंशेश्च ११। दाशो धीवरः। उदि चेर्डैसिः १२ स्वरादिपाठादव्ययत्वम्। उच्चैः। नौ दीर्घश्च १३। नीचैः। सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः १४। रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात्। कित्त्वादनुनासिकलोपः। सूरत उपशान्तो दयालुश्च (१) पूञो यत्लुक् ह्रस्वश्च १५। यत्प्रत्ययः। पुण्यम्। स्रन्सेः शि कुट् किच्च १६। स्रंसतेः शिरादेशः यत्प्रत्ययः कित् तस्य कुडागमश्च। शिक्यम्। अर्त्तेः क्युरुच्च १७। उरणो मेषः। हिंसेरीरन्नीरचौ (२) १८। "हिंसीरो व्याघ्रदुष्टयोः"। उदि-

---

(१) दमादन्यत्र सुरतः क्रीडानुरक्तः।

(२) स्वरार्थं प्रत्ययद्वय रूपं तु तुल्यम्।

दृणातेरजलौ पूर्वपदान्त्यलोपश्च १९। उदरम्। डित् खनेर्मुट् चोदात्तः २०। अच् अल् च डित्स्यातो मुट् स चोदात्तः। मुखम्। अमेः सन् २१। अंसः। मुहेः खो मूर् च २२। मूर्खः। नहेर्हलोपश्च २३। नखः। शीङो ह्रस्वश्च २४। शिखा। माङ ऊखो मय च २५। मयूखः। कलिगलिभ्याम् फगस्योच्च २६। कुल्फः शरीरावयवो रोगश्च। गुल्फः पादग्रन्थिः। स्पृशेः श्वण्शुनौ पृ च २७। श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः। "पार्श्वोऽस्त्री कक्षयोरधः"। पर्शुरायुधम्। श्मनि श्रयतेर्डुन् २८। श्मन्शब्दो मुखवाची। मुखमाश्रयत इति श्मश्रु। अश्र्वादयश्च २९। अश्रु नयनजलम्। जनेष्टन् लोपश्च ३०। जटा। अच् तस्य जङ्घ च ३१। तस्य जनेः जङ्घादेशः स्यादच्च। जङ्घा। हन्तेः शरीरावयवे द्वे च ३२। जघनम्। "पश्चान्नितम्बः स्त्रीकट्यां क्लीबे तु जघनं पुरः"। क्लिशेरन् लो लोपश्च ३३। लकारस्य लोपः। केशः। फलेरितजादेश्च पः ३४। पलितम्। कृञादिभ्यः संज्ञायां वुन् ३५। करकः करका। कटकः। नरकम् नरकः। नारकोऽपि चेति द्विरूपकोषः। सरकम् गमनम्। कोरकः कोरकश्च। शीकयतेराद्यन्तविपर्ययश्च ३६। कीचको वंशभेदः। पचिमच्योरिच्चोपधायाः ३७। पेचकः। मेचकः। जनेररष्ठ च ३८। जठरम्। वचिमनिभ्याश्चिच्च ३९। वठरो मूर्खः। "मठरो मुनिशौण्डयोः" विदादित्वात् (पू५०१४०) माठरः। गर्गादित्वात् (पू५०१४०) माठर्यः। जर्जि दृणातेरलचौ पूर्वपदान्त्यलोपश्च ४०। "जर्दरः शूरयचसोः"। कद्रादयश्च ४१। कद्रः

कुसूलः। कूदरं बिलम्। सूदरः सर्पः। हन्तेर्यु घात्वन्तयो-र्घत्वतत्त्वे ४२। घातनो मारकः। क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ४३। क्रान्तुः पक्षी। गान्तुः पथिकः। क्षान्तुर्मशकः। हर्य्यतेः कन्यन् हिर च ४४। कन्यन् प्रत्ययः। हिरण्यम। क्रुञः पासः ४५। कर्पासः। बिल्वादित्वात्(प्५८७पृ०)कार्पासं वस्त्रम्। जनेस्तु रश्च ४६। जतुर्हस्ती योनिश्च। ऊर्णोतेर्डः ४७। ऊर्णा। दधातेर्यत् नुट् च ४८। धान्यम्। जीर्य्यतेः क्रिन् रश्च वः ४९। "जिव्रिः स्यात् कालपक्षिणोः"। बाहुलकाडलि (प्१५७पृ०) चेति दीर्घो न। मव्यतेर्य्यलोपो मश्चापतुट् चालः ५०। मव्यतेरालः प्रत्ययः स्यात् तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य। ममापतालो विषयः। ऋजेः कीकन् ५१। ऋजीक इन्द्रो धूमश्च। तनोतेर्डउः सन्वच्च ५२। "तितउः पुंसि क्लीबे च"। अर्भकपृथुकपाका वयसि ५३। ऋधु वृद्धौ। अतो वन्। भकारश्चान्त्यादेशः। प्रथेः कुकन सम्प्रसारणञ्च। पिबतेः कन्। अवद्यावमाधमार्वरेफाः कुत्सिते ५४। वदेर्निञि यत्। अवद्यम। अवतेरमः वस्य पक्षे धः। अवमः। अधमः। अर्त्तेर्वन्। अर्वा। रिफतेस्तौदादिकात्। रेफः। लीरीङोर्ह्रस्वः पुट्च तरौ श्लेषणकुत्सितयोः ५५। तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट्। लिप्तं श्लिष्टम्। रिप्रं कुत्सितम्। क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ५६। क्लिशेः कन् स्यात् उपधाया ईत्वं लस्य लोपो नामागमश्च। कीनाशः यमः। किस्वफलश्चिम्व्यम्। अश्नोतेराशुकर्मणि वरट् च ५७। चकारादुपधाया ईत्वम्। ईश्वरः। चतत्वरम्

